॥ श्रीः ॥

महाकविभासप्रणीतं

# स्वप्नवासवदत्तम् ।

काव्यतीर्थोपाधिभाजा

दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा

प्रणीतया व्याख्यया

[illegible]हितम् ।



मूल्यं १ रूप्यकः ।

THE

# SVAPNAVĀSAVADATTAM

OF

## BHĀSA

With the Commentary of

PURUSHOTTAM SHĀSTRĪ

DATTAWĀDKAR "KĀVYATĪRTH"



PUBLISHED BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRṆAYA-SĀGAR' PRESS,

BOMBAY.

1940.

*Price 1 Rupee.*





॥ श्रीः ॥

महाकविभासप्रणीतं

# स्वप्नवासवदत्तम् ।



काव्यतीर्थोपाधिभाजा

दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा

प्रणीतया व्याख्यया समुल्लासितम् ।



तच्च

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः,

स्वीये निर्णयसागरमुद्रणयन्त्रालयेऽङ्कयित्वा प्रकाशितम् ।



शाकः १८६२, सन १९४०



मूल्यं १ रूप्यकः ।



# प्रस्तावना

वाचकाः ! विदितप्रायमेवैतद्भवतां यदेतत्स्वप्नवासवदत्ताख्यं नाटकं यथा भारतवर्षीयैः प्रशस्यते तथा परदेशीयैरपीति । तच्चैतन्महाकविभासप्रणीतेषु त्रयोदशरूपकेषु अन्तर्भवतीत्यधुना महता प्रयत्नेनापादितेन संशोधनेन विद्वद्भिः प्रायः सुनिश्चितमेव । तत्र च दिवंगताः त्रिवेन्द्रमनिवासिनो महामहोपाध्यायगणपतिशास्त्रिणः कुत्रापि निलीय स्थितान्येतानि प्रकाशतामानीय सर्वानपि गीर्वाणवाणीरसिकान् कृतोपकाराञ्चक्रुरित्यत्र नास्ति सन्देहलेशोऽपि, एवञ्च धन्यवादार्हास्ते । एतानि च तान्युपलब्धानि त्रयोदशरूपकाणिः—(१) स्वप्नवासवदत्तम्, (२) चारुदत्तम्, (३) मध्यमव्यायोगः, (४) प्रतिज्ञायौगन्धरायणम्, (५) बालचरितम्, (६) दूतघटोत्कचम्, (७) पञ्चरात्रम्, (८) अविमारकम्, (९) ऊरुभङ्गम्, (१०) प्रतिमानाटकम्, (११) अभिषेकनाटकम्, (१२) कर्णभारम्, (१३) दूतवाक्यम् चेति । एतानि सर्वाण्यपि रूपकाणि एकेनैव कविना प्रणीतानीति यदुच्यते तत्र बहूनि कारणानि सन्ति । तथाहि—दृष्टेषु सर्वेष्वपि रूपकेषु प्रथमतो "नान्द्यन्ते ततः प्रविशति सूत्रधारः" इति रङ्गव्यवहारदिग्दर्शनपरमेव वाक्यं समुपलभ्यते न तु अन्येष्विव नान्दीवाक्यम् । एतद्वैशिष्ट्यमेवोररीकृत्य तथा चान्तिमं भरतवाक्यं "राजसिंहः प्रशास्तु नः" इति बहुत्रैतेषूपलभ्य तेषामेककविप्रणीतत्वे न सन्देहः प्रदर्श्यते कैश्चित् । तत्र च पुनः "सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः । सपताकैर्यशो लेभे भासो देवकुलैरिव" ॥ इति हर्षचरिते महाकविना बाणेन तच्छ्लाघापरे विनिर्मिते पद्ये सूत्रधारकृतारम्भैरिति वैशिष्ट्यं पूर्वोक्तमेवावगम्याचिरोक्तस्यार्थस्य दार्ढ्यमेव प्रतिपादयन्तो महाकविं भासमेव तत्प्रणेतारमङ्गीकुर्वन्ति । पुनश्च सर्वेष्वपि तेषु प्रस्तावनास्थले स्थापनाशब्देन व्यवहारः कृतः, यच्च तस्य प्राचीनत्वं द्योतयति । कालिदासादीनां नाटकेषु प्रणेतुर्नामगोत्रादिकं तत्र तत्र निबद्धं प्रस्तावनाप्रसङ्गेन बहुलमुपलभ्यते, अत्र च सा सरणिः सर्वथैव नाङ्गीकृता दृश्यते । प्रथमतः प्राचीनैः कविभिरेषा सरणिर्नाङ्गीकृता भवेदुत्तरोत्तरं पुनः सा सेवितेति प्रकल्प्यतेऽनेन । अस्य कवेः कालस्य यद्यपि न सम्यङ्निर्णयस्तथापि कालिदासादयं प्राक्तन एवेति निःसन्देहतया वक्तुं शक्यम् । कालिदासो हि पुनः सबहुमानं निर्दिशति तं मालविकाग्निमित्रे "प्रथितयशसां भाससौमिल्लककविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं परिषदो बहुमानः" इति । राजशेखरः कविरपि स्वकृते पद्ये श्लाघते कविमेनम्—"भासनाटकचक्रेऽपि छेकैः क्षिप्ते परीक्षितुम् । स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥" इति । अत्र च पुनर्ग्रन्थस्य नाम यथोपलभ्यते तथा तत्प्रणेतुरपि तदिति कृत्वा न सन्देहोदयेन कश्चिद्भ्रान्तो भवति । रामचन्द्रप्रणीते नाट्यदर्पणे च लिखितोऽयमपि सन्दर्भोऽचिरोक्तसमर्थने भृशं साहाय्यमाचरति, यश्च खलु "यथा भासकृते स्वप्नवासवदत्ते शेफालिकाशिलातलमवलोक्य वत्सराजः—पादाक्रान्तानि

पुष्पाणि सोष्म चेदं शिलातलं। नूनं काचिदिहासीना मां दृष्ट्वा सहसा गता ॥" इति। अत्रापि 'स्वप्नवासवदत्तस्य' 'भासस्य' च साहचर्यं दृश्यत एव। तेन चाचिरोक्तमवदातमेव समर्थनमित्यवगन्तव्यम्। यद्यप्ययं सन्दर्भो मातृकाग्रन्थे नोपलभ्यत इत्युच्यते तथापि लेखकादिप्रमादाच्चिरात्पाठभ्रंशतां प्राप्तः स्यादित्यनुमाने न कोऽपि दोषः। नाटकस्यास्य नामाभिधाने सर्वथा पञ्चमाङ्कगतमेव वस्तु हेतुरभूदिति स्पष्टतया ज्ञायते। तथा च यत् संक्षेपत उक्तं भोजदेवेन स्वग्रन्थे शृङ्गारप्रकाशनाम्नि तेन चाचिरोक्तं विशदमेवेत्यवगन्तव्यम्। स च सन्दर्भ इत्थं—"स्वप्नवासवदत्ते पद्मावतीमस्वस्थां द्रष्टुं राजा समुद्रगृहकं गतः पद्मावतीरहितं च तदवलोक्य तस्या एव शयनीये सुष्वाप; वासवदत्तां च स्वप्नवदस्वप्ने ददर्श; स्वप्नायमानश्च वासवदत्तामावभाषे। स्वप्नशब्देन चेह स्वापो वा स्वप्नदर्शनं वा स्वप्नायितं वा विवक्षितम् ॥" इति। एवञ्च स्वप्ने (इव) दृष्टा स्वप्नदृष्टा; स्वप्नदृष्टा चासौ वासवदत्ता च स्वप्न—(दृष्ट) वासवदत्ता; तामधिकृत्य कृतं नाटकमिति स्वप्नवासवदत्तम्। स्वप्नशब्देनेह स्वप्नवदस्वप्ने दर्शनस्य विवक्षितत्वात्पूर्वोक्तरीत्या समासे दृष्टशब्दस्य विलोपः सह्यत एवेति सूक्ष्मया दृष्ट्यावधार्यम्। एवं च प्रसङ्गतः कथयितव्ये काव्यस्य भेदद्वयमङ्गीक्रियते प्रमाणभूतैः शास्त्रकारैः। तथा चोक्तम्—"दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्। दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम्।" इति (सा० द०)। तद्दृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते। तस्यैतस्य रूपकस्य दश प्रभेदानामनन्ति मनीषिणः। तथाहि—"नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः। ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥" इति (सा० द०)। तानि चैतानि रूपकाणि वस्तुभेदान्नायकभेदाद्रसभेदाच्च परस्परं भिद्यन्त इत्युच्यते यद्यनुकारात्मकत्वेन रूपाणामभेदात्किंकृतो भेद इति शङ्कोत्पद्येत। तथा ह्युक्तम् "वस्तु नेता रसस्तेषां भेदकः" इति (दश०)। तदेतद्वस्तु आधिकारिक—प्रासङ्गिकत्वेन द्विविधं परिकल्प्यते। तथाहि "इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते। आधिकारिकमेकं स्यात्प्रासङ्गिकमथापरम् ॥ अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः। तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥ अस्योपकरणार्थं तु प्रासङ्गिकमितीष्यते।" इति (सा० द०)। आधिकारिकं यथा रामायणे रामसीतावृत्तान्तः। तदङ्गभूतं प्रासङ्गिकम्। यथा तत्रैव विभीषणसुग्रीवादिवृत्तान्तः। पुनश्च—प्रख्यातं (इतिहासादेः) उत्पाद्यं (कविकल्पितं) मिश्रं (ताभ्यां संकरात्) इति तत् त्रिधेत्यलं गौरवभिया। नेतुर्लक्षणं च प्रोक्तं साहित्यदर्पणे—"त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही। दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता ॥" इति। स च नेता—नायकः—पुनश्चतुर्धा प्रकीर्तितस्तत्रैव—"धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च। धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥" इति। अत्र च नाटके पुनर्वस्तु ऐतिहासिकं नेता च धीरललितः। तल्लक्षणं च—"निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्" ॥ इति दृश्यते ह्यत्र यद्रुमण्वद्यौगन्धरायणादिषु न्यस्तसमस्तराज्यतन्त्रो राजा उदयनो वीणावादनादिकलाकुशल इति तत्र तथोपवर्णितः। एवं नायिकाऽपि त्रिविधा—

"अथ नायिकापि त्रिभिदा (१) स्वा, (२) अन्या, (३) साधारणा स्त्रीति। नायकसामान्यगुणैर्भवति यथासंभवैर्युक्ता॥" इति (सा० द०)। रसस्वरूपं चैवं प्रदर्श्यते—"विभावेनानुभावेन व्यक्तः संचारिणा तथा। रसतामेति रत्यादिः स्थायीभावः सचेतसाम्॥" इति (सा० द०)। विभावविषये च प्रोक्तम्—"विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः, इति विभावा उच्यन्ते" इति। तस्य पुनर्द्वौ भेदौ—आलम्बनविभावाः (नायकादयः), उद्दीपनविभावाः (चन्द्रचन्दनकोकिलालापादयः)। लोके यत्कार्यं, काव्ये नाट्ये च समर्पितं तदनुभावपदेन व्यवह्रियते। तथा चोक्तम्—"उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्। लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः" इति (सा० द०)। यथा अश्रुपातादयः। संचारिणो भावास्ते पुनर्निर्वेदादयः स्थिरतया वर्तमाने रत्यादौ प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणात् व्यभिचारिणः कथ्यन्ते। तदेतेषां संयोगाद्रसनिष्पत्तिः। स च शृङ्गारादिभेदेनाष्टविधः। अत्र च नाटकेऽनुभूयमानोऽङ्गी रसो विप्रलम्भशृङ्गाराख्यः। तल्लक्षणं च—"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ" इति (सा० द०)। अत्र च नायको नायिका च कार्यवशात् वियुक्तौ न परस्परमुपेतः। सर्वस्यास्य संक्षेपेण कथितस्य वस्तुनो विस्तरः साहित्यदर्पणदशरूपकादिग्रन्थेषु सविस्तरं प्रदिपादितस्तत एवावगन्तव्यः। विस्तरभयान्मया नात्र सविस्तरं स विषयः प्रतिपादितः। सोमदेवविरचिते कथासरित्सागरेऽपि एतत्सदृश एव कथाभाग उपलभ्यते। जिज्ञासवश्च पुनस्तत्र लावाणकनाम्नि तृतीये लम्बके आद्यौ द्वौ तरङ्गौ दृष्ट्वा कृतकृत्या भवन्त्विति अन्ते निबद्धौ। एतेषु पूर्वोक्तेषु सर्वेष्वपि रूपकेषु कवेर्नामगोत्रादिकस्यानुपलम्भाद्भासभिन्नेन केनापि कविना प्रणीतान्येतानीति महता संरम्भेण विवदन्ति केचित्किन्त्वचिरोक्तसन्दर्भेषु शास्त्रकारग्रन्थादुद्धृतेषु प्रणेतुस्तथा तत्प्रणीतस्यैतस्य नाटकस्य नाम्न उपलम्भादधुना न तत्र विवादेऽवतरामि। यदि पुनश्च भासनाटकव्याख्यानप्रसङ्गमीशकृपया लप्स्यामि तदा क्रमेण तान्सर्वानपि संदेहान्दूरीकृत्य तेषां भासप्रणीतत्वं प्रख्यापयेयमित्याशासे। अन्ते च पूर्वव्याख्यातॄणां च निर्भरपरिश्रमाल्लब्धसार्थक्योऽहं कृतज्ञतया तांस्तथा निर्णयसागरमुद्रणालये कार्यकारिणः प्रधानशास्त्रिणः आचार्योपनामानो नारायणशास्त्रिणो मां समये समये साहाय्यदानेनोपचक्रुरिति तानपि हार्दिकान् धन्यवादान्वितीर्य, तत्रस्थाः कार्यवाहका अपि मामेतत्कार्यकरणेऽवसरं दत्वा भृशं पुरश्चक्रुरिति तेषामप्युपकृतिभिर्बद्धोऽहं किं पुनर्ब्रूयामिति च कृत्वा विरमामि।

मुम्बापुर्याम्,
१९४० तमे ख्रिस्ताब्दे

विदुषां वशंवदः
दत्तवाडकरोपाह्वः पुरुषोत्तमशास्त्री।

## पात्राणि

पुरुषाः—

राजा—वत्सदेशस्य नृपतिरुदयनो नाम ।

यौगन्धरायणः—उदयनस्य मन्त्री ।

विदूषकः—राज्ञो नर्मसचिवो वसन्तको नाम ।

ब्रह्मचारी—लावाणकाख्ये ग्रामे वेदविद्याया अध्येता ।

काञ्चुकीयः—मगधराजकुले भृत्यः ।

सम्भषकः }
भटः } —पद्मावतीसेवकौ ।

काञ्चुकीयः—अवन्तिराजकुले भृत्यः ।

---

स्त्रियः—

वासवदत्ता—अवन्तिराजपुत्री, उदयनस्य प्रथमा भार्या । आवन्तिकापि इयमेवात्र ।

पद्मावती—मगधराजस्य दर्शकनाम्नो स्वसा, उदयनस्य द्वितीया भार्या ।

तापसी—मगधदेशसमीपवर्तिनि तपोवनैकदेशे व्रतमाचरन्ती काचिद्वृद्धा स्त्री ।

चेटी—पद्मावत्या दासी कुञ्जरिका नाम ।

मधुकरिका }
पद्मिनिका } —पद्मावत्याः सखीभूते चेट्यौ ।

धात्री—पद्मावत्या उपमाता ।

विजया—वत्सराजप्रासादे द्वारपालिका ।

धात्री—वासवदत्ताया उपमाता ।

---

## प्रथमाङ्कस्य विषयः ।

वत्सभूमीश्वर उदयने मृगयाविनिविष्टकौतुके कदाचित्तदर्थं लावाणकनाम्नो ग्रामाद्विनिर्गते, स्वकार्ये लब्धप्रसरा यौगन्धरायणप्रभृतयोऽमात्याः स्वामिहितनिहितदृष्टयः परस्परं तथा राज्ञ्या वासवदत्तया सह च संसद्य "प्रवृत्ते ग्रामदाहे वासवदत्ता तद्रक्षणपरो यौगन्धरायणश्च तत्र भस्मीभूताविति अलीकामेव वार्तां राजा यथा शृणुयादपि च यौगन्धरायणः स्वयं परिव्राजकवेषं परिगृह्य राज्ञ्यै वासवदत्तायै चावन्तिदेशपद्धतिमनुसृत्य वेषान्तरं दत्त्वाऽतथाभूतामपि तां स्वभगिनीत्वेन व्यपदिश्य कंचित्कालं यावत्तस्या न्यासस्य योग्यं स्थानमन्वेष्टुं यथा बहिर्गच्छेत्" तथा रहो निरचिन्वन् । अथ चैवं स्थिते कार्यपरो यौगन्धरायणो देशाद्देशान्तरं पर्यटन्वासवदत्तया सह कदाचिन्मगधदेशराजधानीसमीपवर्ति तपोवनं प्राप । तत्र चाश्रिततद्भूविभागायाः कस्याश्चिद्वृद्धतापस्याः पादवंदनाय दर्शकनाम्नो मगधदेशाधिपस्य स्वसा वन्दितस्वमातृपादपद्मा पद्मावती नाम प्रथमत एवोपस्थिताऽऽसीत् । अतिथिजनवाञ्छापूरणप्रवणमानसां तां तत्र विज्ञाय यौगन्धरायणः स्वकार्य आनुकूल्यममितं पश्यन्तां वासवदत्तायास्तन्निकटे न्यासं ययाचे । प्रतिज्ञाते च तयापि तस्मिन्नर्थे परं हृष्टोऽसाववशिष्टकार्यसंपादने दत्तचक्षुरन्यत्र गन्तुमैच्छत् । तत्रैव च यदृच्छया समुपस्थितात्कस्यचिद्ब्रह्मचारिणो मुखाद्वासवदत्तानाशाभिभूतस्योदयनस्योदन्तं श्रुत्वा सर्वेऽपि तत्रस्था व्याकुलाः संवृत्ताः । तद्गुणगणपरवशा पद्मावती च किञ्चिदूनहृदयापि तत्प्राप्त्याशया मसृणसंवेदनाव्यापृतान्ता कामप्यवस्थामनुभवति ।

---

## प्रथमाङ्के स्थल-कालयोर्निर्णयः।

**स्थलम्**—राजगृहस्य तदाख्यमगधराजधान्याः समीपवर्ती तपोवनभूविभागः। तत्र यौगन्धरायण आवन्तिकावेषधारिण्या वासवदत्तया सह देशान्परिभ्रमन्प्राप्तः। स्वमातृपादवंदनं निर्वर्त्य राजगृहं प्रति गन्तुं प्रस्थितायाः पद्मावत्या अपि निवासस्तस्मिन्नेवाश्रमपदेऽभीष्ट आसीत्। सापि तत्र सपरिवारा आगच्छति। तत एव प्रथमाङ्कविषयस्य प्रारम्भः।

**कालः**—ब्रह्मचारिणः प्रवेशसमये मध्याह्न आसीदिति ज्ञायते तेनैव तथोक्तत्वात्। तेन च सूर्योदयादूर्ध्वं प्रहराभ्यन्तर एव वस्तुनः प्रारम्भः स्यादित्यनुमीयते। ब्रह्मचारिण आगमनानन्तरं यत्खलु वस्तु प्रस्तुतं तदादिनान्तमित्यपि ज्ञायते काञ्चुकीयस्य पद्येनाङ्कसमाप्त्यवसरे। एवं च मध्याह्नस्य पूर्वतोऽवधिं गृहीत्वाऽऽदिनान्तं समयो विज्ञेयः प्रथमाङ्कस्य।

॥ श्रीः ॥

महाकविभासप्रणीतं

# स्वप्नवासवदत्तम् ।



दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा प्रणीतया व्याख्यया समुल्लासितम् ।



## प्रथमोऽङ्कः ।

[ नान्द्यन्ते ततः प्रविशति सूत्रधारः ]

**सूत्रधारः—**

उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥ १ ॥

---

॥ श्रीः ॥

लीलावशाद्धि भगवान् सर्ववस्तुषु तिष्ठति ।
स कथं वितथो भूयान्मयि कार्यव्यवस्थिते ॥ १ ॥
तत्प्रसादात्प्रसादोऽस्तु व्याख्याने रचिते मया ।
सेवायै विदुषां पात्रं भूयादित्येव प्रार्थये ॥ २ ॥
कृत्रिमायां पुत्रिकायां सर्वैर्दृष्टा च कार्यता ।
सूत्रधारस्य संपर्कान्मयि संभाव्यते न किम् ॥ ३ ॥
यच्चैतन्यं तथाभूतं परं क्षेमकरं महत् ।
अस्तु मे भावितं नित्यं मच्चित्ते न हीयताम् ॥ ४ ॥
श्रद्धानौका च साहाय्यं कुर्यात्संतरणे पुनः ।
साहसे वा प्रयत्ने वाऽऽशासेऽहममितं ततः ॥ ५ ॥
फलन्तु सुहृदां वाचो गुरुभ्योऽधिगतं च यत् ।
प्रतिपदं व्यवहारे च लब्धो ज्ञानकणश्च मे ॥ ६ ॥
गूढगूढतमा धन्या भङ्गियुक्ताश्च चित्रिताः ।
आपातसुगमा वाचः कविरत्नविनिर्गताः ॥ ७ ॥
प्रवेशस्तु मया तत्र स्वल्पबुद्धिसमाश्रितः ।
क्रियते फलितो वासौ विचार्यमखिलैर्बुधैः ॥ ८ ॥

अथ व्यवसिते कस्मिन्नपि कार्येऽदृष्टसाचिव्यस्यास्ति महती विचारणा। प्रारब्धा-जन्मान्तरदोषाद्वा कदाचिद्भवति विघ्नबाहुल्यं येन च सर्वमपि तद्विपरीतं संजायते समाप्तिफलसंभिन्नं वा न दृश्यत इति बहुशो दृष्टत्वादनुभूतत्वात्तथैव सिद्धान्तितत्वाच्च ग्रन्थकर्तृभिः प्रायस्तादृशसामर्थ्यवन्मङ्गलमेवेति सम्यङ्निर्णीय तत्र चानुमानादिप्रमाणैः श्रुतिसंमतिमप्यवेक्ष्य नियमेन प्रयत्यते।

इमामेव सरणिं पुरस्कृत्य तत्रभवान् महाकविर्भासः **स्वप्नवासवदत्ता**भिधानं दृश्यं काव्यं निर्मातुमिच्छुः प्रयोगे तस्य प्रसाधिते रङ्गे सर्वथैव विघ्नलेशमप्यनिच्छन् तदर्थं च कृतस्य नान्दीस्वरूपस्य मङ्गलस्य तत्र सर्वकार्यकारित्वात्प्रधानस्य सूत्रधारस्य मुखात्तदुच्चारमिच्छन् तत्प्रवेशं सूचयति "नान्द्यन्ते" इत्यादिना।

नान्द्या अन्ते ततः समनन्तरमेवेति तदुत्तरोऽव्यवहितश्च कालो ज्ञेयः। अवसितायामेव तस्यामिति यावत्। सूत्रं प्रयोगानुष्ठानं धारयतीत्यर्थे सूत्रधारो निगद्यते। तल्लक्षणं चोक्तम् मातृगुप्ताचार्यैः—"चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः। नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित्॥ नानागतिप्रचारज्ञो रसभावविशारदः। नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः॥ छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः। तत्तद्गीतानुगलयकलातालावधारणः॥ अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः। एवं गुणगणोपेतः सूत्रधारोऽभिधीयते॥" इति।

अनेन तस्य नानाविधशास्त्रकलाकलापकोविदत्वं ज्ञायते तेनैव च प्रधानस्यैव प्रथमावतार इति न्यायेन पूर्वरङ्गविधाने तस्यैव सर्वथाऽधिकार इति सूक्ष्मया दृष्ट्याऽवगन्तव्यम्। तथैव चोक्तम्—

"त्र्यस्रं वा चतुरस्रं वा शुद्धं चित्रमथापि वा।
प्रयुज्य रङ्गान्निष्क्रामेत् सूत्रधारः सहानुगः॥ (ना० शा०)
पूर्वरङ्गं विधायादौ सूत्रधारो निवर्तते।
प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः॥ (सा० द०)
नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम्।
रङ्गदैवतपूजाकृत् सूत्रधार उदीरितः॥
सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः।
नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृताम्॥" (ना० शा०)

अपि च सूत्राणि तन्तवस्तान्धारयतीत्यर्थेन पुरातनी कृत्रिमदारुपुत्रिकाभी रङ्गे स्थापिताभिरधस्तात्सूत्रैश्चालिताभिरेवं च सामाजिकान् रञ्जयन्ती नाट्यपद्धतिः परामृश्यते। तत्रस्थः प्रमुखः कार्यवाहकः सूत्रचालनाकर्मणि नियुक्तः सूत्रधार इति व्यवहृतः। ततश्च प्रगतिपथपरायां नाट्यकलायां तत्रस्थस्येव अत्रस्थापि सूत्रधारस्य मुख्यक्रियाकारित्वात् सूत्रधार इति लाक्षणिको व्यवहार इत्यनुसंधेयम्।

नान्दीस्वरूपं च—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥

मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥" ( सा० द० )

तथैव "सूत्रधारः पठेन्नान्दीम्" ( ना० शा० ) इत्यादिपूर्वोक्तदिशाऽपि नान्द्याः पद्यश्लोकादिस्वरूपत्वमेवावगम्यते । अत्र नाटके श्लोकरूपाया नान्द्याः प्रागेव "नान्द्यन्ते ततः प्रविशति सूत्रधार" इति समुल्लेखोऽपरेपु केपुचिच्च तदुत्तरमिति विभिन्नः प्रवाहः । अत्र विचार्यते । यदि नान्द्याः श्लोकस्वरूपत्वमेव तदा "नान्द्यन्ते" इत्यादिशब्दजातस्य पूर्वं प्रयोगः कथं ? स च कथमपि न संगच्छते । अतो "दुन्दुभिस्त्वानको भेरी भम्भा नासूश्च नान्द्यपि" इति **वैजयन्त्युक्तदिशा** नान्दीशब्देनानकाख्यवाद्यमेव ग्राह्यं । आनकश्चोपलक्षणम् । अन्यवाद्यप्रचयस्य स्वीकारे न काऽप्यनुपपत्तिः । तथाहि — रङ्गपूजासमये तदर्थं सामाजिकानामन्यविषयकाणि मनांस्याकर्षितुं वा वादिते आनकादिवाद्यकलापे ततः सूत्रधारस्य प्रवेश इति तदर्थः ।

श्रूयते च केरलदेशीयानां नाट्यप्रवर्तकानां तथाभूतैव सरणिः । नाट्यप्रयोगारम्भसूचनार्थं वादयन्ति स्म ते आनकादीनि वाद्यानि । अस्या एव सरणेरङ्गीकारोऽर्वाचीननाटकप्रयोगेष्वप्युपलभ्यते यत् प्रयोगारम्भसूचनार्थं तत्रस्था अपि कार्यवाहका द्विस्त्रिर्वा घण्टारवं कुर्वन्तीति ।

अतःप्रभृति "नान्द्यन्ते" इत्याकारकाणि नटव्यवहृतयेऽत्र कविनोक्तानि तानि सर्वाण्यपि वाक्यानि रङ्गव्यवहारदिग्दर्शनपराण्येवावगन्तव्यानि ।

अथोक्तकार्यनिर्वाहार्थं प्रविष्टः सूत्रधार आशीर्वादपुरःसरं मङ्गलमातनोति—

**उदयनेति**—बलस्य सीरपाणेः कृष्णाग्रजस्य भुजौ त्वां पाताम् । त्वामिति सामाजिकानुद्दिश्येति ज्ञेयम् । तस्य बलदेवप्रियत्वमग्रिमेणापि संदर्भेण ज्ञायते । तथा च चतुर्थेऽङ्के—"प्रसाधितबलदेवबाहुदर्शनीयां" इत्यादि । यद्यप्यत्र "युष्मान्" "वः" इति बहुत्वेनोल्लेखः कर्तुं योग्यमासीत्तथापि सामाजिकसंसत्स्वरूपग्रहणेनैकवचनमपि न विरुध्यते । कीदृशौ तावित्याह । उदये उदयकाले यो नवो नूतन इन्दुः सद्यश्चक्रवालात्प्रकटीभवन्नित्यर्थः । तत्सवर्णौ । ईषत्ताम्राविति यावत् । नवशब्देन सद्यःप्रकटितत्वं गृहीत्वा तस्य सौभाग्यवत्त्वं तथा ईषद्रक्तत्वं चानायासेन सिध्यति । यस्यां कस्यामपि तिथौ सायं रात्रौ वोदितोऽसावाह्लादकार्येव । एवं नवशब्देन केवलं द्वितीयाचन्द्र इत्यर्थो न स्वारस्यमवगाहते ।

अपि चोदयन्निन्दुः सर्वदैव नवः । अहरहश्चेति सहस्रशो दृष्टोऽपि स तथाभूतोऽस्माकं नवामेव प्रीतिं करोति । प्रतिदर्शनं च सर्वमपि रम्यं वस्तुजातं नवमेव । तथा चोक्तम्—"नवां नवां प्रीतिमहो करोति" इति । अनेन नवशब्देन केवलं द्वितीयाचन्द्र इत्याग्रहो निरस्त इति वेदितव्यम् । भुजयोरीषत्ताम्रत्वं तस्य संपादितस्य बलस्याधिक्यं यथा द्योतयति तथैव मदिरापानव्यसनिनस्तस्य शरीरे तत्प्रभावमपीत्यवधेयम् । तस्य मद्यपत्वमग्रिमविशेषणेनैव ज्ञायते ।

**आसवदत्तावलाविति**—आसवेन दत्तं अवलं सामर्थ्यहीनत्वं याभ्यां तौ। अत्र सामर्थ्यहीनत्वमल्पप्रमाणकं तथा मद्यपानजनितप्रभावव्याप्तमेव ग्राह्यमन्यथा तस्य बलशालित्वं व्याहन्येत। तदेवाञ्जसा स्पष्टतया च निर्दिशन्ती नामावलिरपि द्रष्टव्याऽमरे—"कालिन्दीभेदनः, हली, मुसली, बलः, सीरपाणिः" इति। तस्य मद्यपत्वं च सुप्रसिद्धमेव काव्यादिषु। तथाहि माघकाव्ये चोक्तम्—

"घूर्णयन्मदिरास्वादमदपाटलितद्युती।
रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ॥" (स० २ श्लो० १६)
"ककुद्मिकन्यावक्त्रान्तर्वासलब्धाधिवासया।
मुखामोदं मदिरया कृतानुव्याधमुद्वमन्॥" (स० २ श्लो० २०)

अथवा दत्तं आसवं मदिरा यस्यै सा आसवदत्ता। आसवदत्ता अवला याभ्यां तौ आसवदत्तावलौ। पूर्वोक्तपद्यद्वये यथा बलस्य मद्यपत्वं तथैव तस्य प्रियायाः ककुद्मि-कन्याया रेवत्या अपि तज्ज्ञायते तेनान्तरोक्तविग्रहोऽपि न विरुध्यत इति ज्ञातव्यम्।

**पद्मावतीर्णपूर्णाविति**—पद्माया लक्ष्म्या अवतीर्णं अवतारः प्राकट्यं वा तेन पूर्णौ संपन्नौ (अव+तॄ=अवतीर्ण) "नपुंसके भावे क्तः" (पा० सू० ३।३।११४) क्लीवत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्।

द्रष्टव्यमत्र—"इदमेषामासितं शयितं गतं भुक्तं वा" इति। केयूराद्यलङ्कार-परिपूर्णौ इति भावः। अथवा पद्मा लक्ष्मीः पर्यायेण ऋद्धिः शोभा वा तेन युक्तौ शोभायुक्तौ कान्तियुक्तौ इत्यर्थोऽपि न कमनीयतामावहतीति नेति ज्ञेयम्। तेन च भुजयोर्दीर्घत्वं तथा परिणाहवत्त्वं च ज्ञायते। तथात्वमेव भुजयोः शोभादायक-त्वमिति तदपि रमणीयम्।

**वसन्तकम्राविति**—वसन्त इव कम्रौ मनोज्ञौ "नमिकम्पिस्म्यजसकमहिंस-दीपो रः" (पा० सू० ३।२।१६७) नम्रः, हिंस्रः, कम्रः—रप्रत्ययश्चात्र शीलं द्योतयति। शीलं स्वभावस्तेन च यथा वसन्ताख्यो ऋतुः स्वभावत एव कमनीयोऽपि पुष्पपल्लवादिभिर्विशेषेण तथैव एतावपीति भावः। अत्र कमनीयता स्वभावतस्त-त्राप्यलङ्कारादिभिश्च।

अथवा वसन्ते कम्रौ। वसन्तऋतुश्च पुष्पपल्लवादिप्रचुर इति तु सर्वजनीनम्। तानि च पुष्पादीनि शरीरप्रसाधनाय सर्वथैवोपयुज्यन्त इत्यपि सुप्रसिद्धम्। तेन तत्कालोचितशृङ्गारवेषस्वीकारेण कालोपाधिना कमनीयतामापन्नौ। स्वभावतः सुन्दरौ तत्रापि प्रसाधिताविति शोभायाः प्रकर्ष एवेत्यवगन्तव्यम्। एवं च केवलं "वसन्ते कम्रौ" इत्यनेनान्यप्रयुक्ता शोभेति न स्यातां तौ कदाचित् स्वभावतः सुन्दराविति शङ्कास्थानमुत्पद्येतेति सूक्ष्मया दृष्ट्या द्रष्टव्यम्।

अत्र च मुद्रालङ्कारमुखेन प्रधानपात्राणां **उदयन-वासवदत्ता-पद्मावती-वसन्तकानामुल्लेखः** कृतः। तल्लक्षणं च "सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः" इति॥

एवमार्यमिश्रान्विज्ञापयामि । अये ! किं नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

---

तथाहि—वत्सस्य बलशालिन उदयनस्य भुजौ पातामित्यनेन तस्य भुजयो रक्षणसामर्थ्यं तथा शत्रुतः स्वराज्यग्रहणं च ध्वन्यते । वासवदत्ता बलं ययोस्ताविति विग्रहोऽप्युदयनस्य वासवदत्तायां प्रीतेराधिक्यं द्योतयति । प्रियायाः स्मृतिरप्यङ्गीकृतकार्यनिर्वाहे परमुपकरोति तत्सांनिध्यं चातितरामिति किं वक्तव्यं ? द्रष्टव्यं **किराते**—

"अकृत्रिमप्रेमरसाभिरामं रामार्पितं दृष्टिविलोभि दृष्टम् ।
मनःप्रसादाञ्जलिना निकामं जग्राह पाथेयमिवेन्द्रसूनुः ॥" इति ।

तथाच पद्मायाः पद्मावत्या अवतीर्णेन प्राकट्येन, सांनिध्येन समागमेन वा पूर्णौ संपन्नमनोरथौ । वसन्तेन वसन्तकाख्येन विदूषकेन कम्रौ स्पृहणीयौ । तस्य नर्मसाचिव्यकारित्वात् ।

अथवा वत्सस्य बुद्धिबलप्रयुक्तस्य यौगन्धरायणस्य । भुजाविति कार्यद्वयम् । तत्स्वरूपं च वासवदत्तासंगोपनमपि च पद्मावतीप्राप्तिद्वारा स्वामिराज्यप्रत्यायनमिति ज्ञेयम् । अत्र वासवदत्ताबलमिति निश्चितकार्ये तत्सम्मतिरिति हृदयंगमम् । पद्मावत्याः समागमोऽप्यभिलषितकार्यपूर्णतायां परमुपकरोतीति ।

उदयनं वाति गच्छति प्राप्नोतीति उदयनवा, तथा इन्दुना सवर्णा, इति पार्थक्येन सभङ्गश्लेषेण वा वासवदत्ताया विशेषणे ।

एवं च पत्रावल्यपरनाम्न्या नान्द्या लक्षणं च संगच्छते । तथा चोक्तम्—

"यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः ।
श्लेषेण वा समासोक्त्या नान्दी पत्रावली च सा" ॥ इति ।

आर्यावृत्तमिदम् । तल्लक्षणं तु—

"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥" इति ॥ १ ॥

**एवमिति** । एवं बुद्धिस्थप्रकारेण । आर्याश्च सज्जनाः । "महाकुलकुलीनार्यसभ्यसज्जनसाधवः" इत्यमरः ।

तथा च भरतः—

"कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता ।
अद्रोह इति येष्वेतत्तानार्यान्संप्रचक्षते ॥" इति ।

मिश्रशब्दश्च पूज्यतादर्शी । तेन पूज्या माननीया इत्यागच्छति । यद्यपि केवलमार्यशब्देन सा कृतार्थता भवति तथापि "द्वौ नञौ प्रकृतिदार्ढ्यं गमयत" इतिवत् आर्यमिश्रशब्दौ सभ्येषु पूज्यताधिक्यं द्योतयतः ।

नेपथ्य उत्सारणाशब्दं श्रुत्वाऽऽह—**अये** इति । अये इति विज्ञापनभङ्गेनोत्पन्नं विषादं, अकस्माच्छब्दश्रवणेन संजातमाश्चर्यं वा द्योतयति ।

( नेपथ्ये )

उस्सरह उस्सरह अय्या! उस्सरह। [उत्सरतोत्सरतार्याः! उत्सरत।]

**सूत्रधारः**—भवतु, विज्ञातम्।

---

किं नु खलु इति कारणजिज्ञासायाम्। किमर्थं, केन कारणेन वेति। मयि विज्ञापनव्यग्रे सति विज्ञप्तिपरे, प्रवृत्तमात्र एव तत्रेति। "व्यग्रो व्यासक्त आकुले" इत्यमरः। "यस्य च भावेन भावलक्षणम्" ( पा० सू० २।३।३७ ) इति भावलक्षणार्थे सप्तमी। सा च ततो यत्र यस्य क्रियया क्रियान्तरं लक्ष्यते।

शब्द इव इति—इवशब्दश्चानिश्चिततताद्योतकः। नेपथ्यगतशब्दस्यास्फुटत्वात्। कस्य शब्दः किमर्थं वासावुदीरित इति किमपि न ज्ञायत इति तदर्थः। अङ्ग इति संबोधनार्थकः। तथा च अमरः—"स्युः पाट् प्याडङ्ग हे है भोः॥" इति। अपि च "पुनरर्थेऽङ्ग" इत्यमरोक्तदिशा "पश्यामि पुनः" इति पुनरर्थेन वाक्यस्यालङ्कृतिरपि। पश्यामि निश्चिनोमि। कस्य वायं शब्दः, किमर्थं वोच्चार्यत इति सर्वमेव ज्ञास्यामीति। द्रष्टव्यमत्र। विज्ञापनास्वरूपं च कवेर्नामगोत्रोच्चारणादिकम्। तथा चाह **साहित्यदर्पणे**—

"रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।
रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत्" ॥ इति।

**भावप्रकाशिकाकारश्च**—

"इत्थं रङ्गविधानस्य संबन्धादिप्रसिद्धये।
गोत्रं नाम च बध्नीयात्पूजावाक्यं सभासदाम्" ॥ इति।

इयञ्च परिपाटिः प्रायो बहुलैः कविभिरङ्गीकृता दृश्यतेऽत्र च सा कुशलतया परिहृतेति कवेर्विनयशालिताऽनुपमेति सहृदयहृदयसंवेद्यम्। वस्तुतस्तु नासीत्तादृशी पद्धतिरस्य कवेः काले, तदुत्तरं च साङ्गीकृतेति ज्ञायते।

**नेपथ्य इति**—नेपथ्यं जवनिकान्तर्भागो नटप्रसाधनस्थलं वा। तत्रोक्तम्—

"नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्।"
"कुशीलवकुटुंबस्य स्थलं नेपथ्यमुच्यते।" इति।

वेषभेदेऽप्ययं नेपथ्यशब्दो व्यवह्रियते।

तथा चाहुः—"आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्" ॥

"रामादिव्यञ्जको वेषो नटे नेपथ्यमुच्यते ॥" इति। एवञ्च तं तं संदर्भमनुसृत्य ते तेऽर्था ग्राह्याः। उत्सरतापसरत। दीयतां मार्ग इति यावत्। रङ्गमभिलक्ष्याभिपततोर्भटयोरियमुक्तिः।

सा चासकृदिति तयोः संभ्रमत्वं द्योतयति।

**भवत्विति**। यदा तौ भटौ उत्सरतां तदा ... सूत्रधारस्य

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः ॥ २ ॥

( निष्क्रान्तः )

इति स्थापना ।

---

संदिह्यमानत्वं । समीपं प्राप्तयोस्तयोः पुनः सूत्रधारस्य संदेहो निवृत्त इति ज्ञायते क्षवत्वित्यादिना । तदानीं शब्दस्य निःशेषतया स्फुटत्वात् । "कस्य वाऽयं शब्दः" "किमर्थं वा प्रयुज्यते" इति विषये सर्वथैव निवृत्तसंदेहो जातः । यत्खलु ज्ञातं तदेव कथयति भृत्यैरित्यादिना । **भृत्यैरिति**—मगधानां राजा मगधराजः तस्य । "राजाहःसखिभ्यष्टच्" (पा० सू० ५।४।९१) एतदन्तात्तत्पुरुषाट्टच् स्यात् ॥ अधुना "बिहार" इति ख्यातस्य भूविभागस्य दक्षिणतः प्रसृतस्य प्रदेशस्य मगधा इति पुरातनं नाम ।

स्निग्धैर्हार्दिकैः, विश्वासपात्रैश्चेति गम्यते । अत एव तेषां कन्यानुगामित्वं युज्यते । न ह्यतथाभूता राजकुमार्यनुगमनकार्ये नियुज्यन्ते । कन्यामनुगच्छन्ति तथाभूतैर्भृत्यैरनुचरैः । सर्वोऽखिलः । तपोवनं गतस्तपोवनगतः तपोवननिवासी जनो लोकस्तपस्विन आश्रमवासिनो वा । "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" (पा० सू० २।१।२४) द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स तत्पुरुषः । धृष्टमविनयं यथा स्यात्तथा । उत्सार्यतेऽपसार्यते । अनुष्टुप् छन्दः । तल्लक्षणं तु—

"श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥" इति ।

अनुष्टुप्छन्दः श्लोकपदेनापि व्यवह्रियते ॥ २ ॥

अनेन समनन्तरपात्रप्रवेशः सूचितः ।

ज्ञातस्य सम्यग्विवरणं कृत्वा प्रयोगारम्भे कृतकृत्यः सन् सूत्रधारो रङ्गान्निवर्तते । तदेव कविस्तस्य निष्क्रमणमाह **निष्क्रान्त** इति । वस्तुतस्तु स्थापकनाम्नः सूत्रधारसहायस्येदं कर्तव्यम् । काव्यार्थस्य स्थापनात्स्थापकः । तेन च स्थापकेन यत्र कथावस्तु बीजं पात्रं वा स्थाप्यते सा स्थापना । अत्र च तत्कार्यं सूत्रधारेणैव निर्वाहितम् । स्थापकस्य कार्यं तूक्तं साहित्यदर्पणे—

"प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः ।
दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥" इति ।

स्थापनालक्षणं च द्रष्टव्यम् तत्रैव—

"नटी विदूषको वापि पारिपार्श्वक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥

(प्रविश्य)

**भटौ**—उस्सरह उस्सरह अय्या! उस्सरह। [उत्सरतोत्सरतार्याः! उत्सरत।]

(ततः प्रविशति परिव्राजकवेषो यौगन्धरायण आवन्तिकावेषधारिणी वासवदत्ता च)

---

चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावना च सा॥" इति

एवं चेयं स्थापना आमुखं, प्रस्तावना इति नाम्नापि तत्र तत्र व्यवह्रियते। आमुखमिति यथार्थं नाम। तथाह्युक्तं **सुधाकरे**—"विधेर्यथैव संकल्पो मुखतां प्रतिपद्यते। प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता"॥ इति। अस्याश्च पञ्च भेदाः—

"उद्घातकः कथोद्घातः प्रयोगातिशयस्तथा।
प्रवर्तकावगलिते पञ्च प्रस्तावनाभिदाः॥" इति

अत्र च स्थापनाया भेदः प्रयोगातिशयः। तथाहि—

"यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते।
तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा॥"

इत्युक्तदिशा सूत्रधारवाक्यसमनन्तरमेव पात्रप्रवेशो जात इति दिक्।

सूत्रधारोद्दिष्टानां पात्राणां प्रवेशः सूच्यते (**प्रविश्य**)—पदेन। रङ्गमिति शेषः।

अवधेयमत्र—सूत्रधारोक्तौ "भृत्यै"रिति बहुत्वेनोल्लेखः, अत्र तु "भटा"विति द्वयोरेव प्रवेश इति विसङ्गतिस्तथापि भृत्यैरिति सूत्रधारस्य न दृष्टोल्लेखोऽपि तु समीपं प्राप्तयोस्तयोः केवलं शब्दं गृहीत्वा, अपि च शब्दे शब्दान्तरमिश्रणं ज्ञात्वा नायमुत्सारणाशब्द एकस्य भृत्यस्येति कृत्वा बहुत्वेनेति ज्ञातव्यम्। एवं च नासङ्गतिः। **भटौ** योधौ। तेन तयोः कन्यारक्षणसामर्थ्यं ध्वन्यते। अथ प्रसङ्गानुरोधेनोपयोगानुगुणौ द्वौ जनाववतारयति **ततः प्रविशती**त्यादिना।

परिव्राजकस्य वेष इव वेषो यस्य सः। परित्यज्य सर्वं व्रजति इति परिव्राजकः। भिक्षुवेषधर इत्यर्थः। युगन्धरस्यापत्यं पुमान् यौगन्धरायणः। "नडादिभ्यः फक्" (पा० सू० ४।१।९९) उदयनस्य राज्ञः प्रधानो मन्त्री। अस्य पिताऽप्युदयनस्य पितुः प्रधानामात्यकर्मणि नियुक्त आसीत्। एवं च परंपराप्राप्तामात्यपदतया तस्य राजनीतिनिपुणता विश्वस्तत्वं च ज्ञायते। अत एव तस्य वासवदत्तासहितस्य महति गुप्तकार्ये नियोजनमुपपद्यते।

अवन्तिषु जाता आवन्तिका। "मनुष्यतत्स्थयोर्वुञ्" (पा० सू० ४।२।१३४) तस्या वेषं धारयतीति। वासवदत्ता उदयनस्य महिषी। केवलं कार्यवशाद्गृहीता-

---

१ (ततः प्रविशतः [illegible]) [illegible] सागरौ।

**यौगन्धरायणः**—( कर्णं दत्वा । ) कथमिहाप्युत्सार्यते ! कुतः,—

धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-
मानार्हस्य जनस्य वल्कलभृतस्त्रासः समुत्पाद्यते ।
उत्सिक्तो विनयादपेतपुरुषो भाग्यैश्चलैर्विस्मितः
कोऽयं भो निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया ॥ ३ ॥

---

वन्तिकावेषा यौगन्धरायणेन सार्कं प्रस्थिता । आवन्तिकावेषधारिणीत्यनेन वेष-भूषावैजात्यस्य तं तं देशमनुरुध्य भिन्नभिन्नाभिरुचिरासीदिति ज्ञायते ।

**कर्णं दत्त्वेति**—संदिग्धस्य निश्चितार्थे प्रवृत्तिं द्योतयति । तपोवनं, तत्र चाविनीतमुत्सारणेति न कल्पनासहम् । इत्येव हेतोस्तस्य संदेहोदयः । तस्य च निराकरणार्थं शब्दागमदिशमभिलक्ष्य कर्णस्योन्मुखीकरणम् । तमेव संदेहमाश्चर्याभि-भूतः प्रकटयति कथमित्यादिना ।

**इहापीति**—इह उत्सारणानर्हे तपोवनभूविभागे । अपि शब्दश्च तत्र सर्वथैव तादृशकर्मानुचितत्वं द्योतयति । कुतः कस्मात्कारणादिति चेत्तत् कारणं विविनक्ति—**धीरस्येति** । धीरस्य धैर्यान्वितस्य गम्भीरस्य वा । अत्र च धीरत्वं तपःसामर्थ्य-संपादितमिति ज्ञेयम् । सर्वेषामपि षष्ठ्यन्तशब्दानां "त्रासः समुत्पाद्यते" इत्यत्रा-न्वयः । आश्रमं संश्रितस्तस्य आश्रमवासिनो वनवासिन इति यावत् । "आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे । अस्त्रियाम्" इति मेदिनी । नगरवासिनो यथाकथं-चित् त्रासस्य योग्यत्वम्, अत्र तु "आश्राम्यन्ति यस्मिन् यद्वा आसमन्ताच्छ्रमो यत्र स्वधर्मसाधनक्लेशात्" इति प्रतिपादितदिशा सर्वान् संसारत्रासान् विहातुं वनं प्राप्त-स्यापि त्रास इति महत्कष्टमिति भावः ।

वसतः, तपोवन इति शेषः । यद्वा पर्णकुटीरादिकं निर्माय वसतः । अनेन तेषां गृहारामसौख्ये निरीहा ध्वन्यते । वने भवैर्वन्यैः फलैस्तुष्टस्य तृप्तस्य । अनेन तेषा-माहारकर्मण्ययाचितवृत्तित्वं तथा गुडौदनादिषु पक्वान्नेषु महद्वैतृष्ण्यं ज्ञायते । मान-मर्हति असौ मानार्हः पूज्यस्तस्य । पूर्वोक्तं सर्वमेव पूज्यत्वे हेतुः । वल्कलानि वृक्ष-त्वचश्चीवराणि वा सन्ति यस्य तस्य । वसनपरिधानादौ वैतृष्ण्यमुक्तमनेन । जनस्य लोकस्य, समुदाये एकवचनं । जनानामित्यर्थः । त्रासो भयं समुत्पाद्यते दीयते । अस्थानेऽयमुत्सारणानियोगः केन वोद्धतेनाङ्गीक्रियत इति भावः । "त्रासोत्रासौ दरो भीतमातङ्को भीश्च साध्वसम्" इति शब्दार्णवः ।

ननु त्रासश्चायं दीयते भृत्यैस्ते च पराधीनाः सन्तो यथादेशं स्वामिनो व्यवहर-न्तीति चेत्तत्रापि निदेशकारिण एवापराधं ब्रूते उत्सिक्त इत्यादिना । भोः ! उत्सि-क्तोऽमर्यादः, उद्धतः । तस्य च कार्याकार्यविवेको न वर्तत इति सूचितम् । विनयो नम्रत्वं तस्मादपेतो वियुक्तो नम्रताहीन इत्यर्थः । तथाभूतः पुरुषः । अपादाने पञ्चमी । अपेतशब्दस्य विनयादित्यत्रान्वय एकदेशी । चलैश्चञ्चलैर्भाग्यैः शुभाशुभकर्मभिस्त-,

**वासवदत्ता**—अय्य ! को एसो उस्सारेदि ? [ आर्य ! क एष उत्सारयति ? ]

**यौगन्धरायणः**—भवति ! यो धर्मादात्मानमुत्सारयति ।

**वासवदत्ता**—अय्य ! णं हि एव्वं वत्तुकामा । अहं वि णाम उस्सारइदव्वा होमि त्ति । [ आर्य ! न ह्येवं वक्तुकामा । अहमपि नामोत्सारयितव्या भवामीति । ]

---

त्प्रभवैर्विभवैर्वा, घटीयन्त्रन्यायेन अस्थिरैः सर्वदैव विपरिवर्तमानैर्विस्मितो गर्वितः । एवं च तस्य धनोन्मत्तता, सा चास्थिरया लक्ष्म्येति महदन्धत्वं प्रकटीकृतम् । लक्ष्म्याश्चलत्वं च काव्यादिषु तत्र तत्रोल्लिख्यते । तथा हि—"शरदभ्रच्छला हि श्रियः" । "सन्ध्याभ्रलेखेव मुहूर्तरागा" इति । कादम्बर्यामपि—"गन्धर्वनगरलेखेव पश्यत एव नश्यति ।" "गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला ।" "इयं च खड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः उच्चैःश्रवसश्चञ्चलताम्" इत्यादि ।

कोऽयं निभृतं प्रशान्तमिदं तपोवनमाज्ञया उत्सारणानिदेशेन ग्रामीकरोति । न ग्रामः अग्रामः । अग्रामं ग्रामं करोति । "कृभ्वस्तियोगे संपद्यकर्तरि च्विः" ( पा० सू० ५।४।५० ) अभूततद्भाव इति वक्तव्यम् ॥ इति च्विः । यथा ग्रामे व्यवहर्तव्यं तथाऽत्र व्यवह्रियत इति भावः । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं च "सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्" इति ॥ ३ ॥

**अय्येति**—आर्य इति बहुमानप्रयुक्तं संबोधनम् । द्रष्टव्यमनेन राजकीयैरपि पुरुषैः कियत् खलु महत्त्वं दीयमानमासीत् प्रधानामात्यादीनां पुरातने काल इति ।

**को एसो इति** । अनेन वासवदत्ताया अप्युत्सारणाविषये सर्वथाऽरुचिर्ज्ञायते ।

**भवतीति**—भवच्छब्दः श्रेष्ठवाचकः ।

**यो धर्मादिति**—स उत्सारयतीति शेषः । यच्छब्देन तच्छब्दस्याक्षेपः । "यत्तदोर्नित्यः संबन्धः" इति प्रतिपादितदिशेति ज्ञेयम् । यथाहि खलु "आत्मा जानाति यत् पापम्" ( सा० द० ७ परि० ) इत्यत्र तदात्मा जानाति यत्पापं तद्देवात्रेति संक्षेपः । धर्मात्पुण्यात्सदाचारात् वा आत्मानमुत्सारयत्यपश्लेषयति विदूरीकरोति वा, तपोवन उत्सारणया स्वयं धर्माद्भ्रश्यतीत्यर्थः । अत्र तपोवने क्रियमाणोत्सारणा धर्मभ्रंशे हेतुः ।

**अय्येति** । न हि एवं भवदुक्तप्रकारेण भवदाशयानुरोधेन वा वक्तुं कामो यस्याः सा ईदृश्यहम् । न मे प्रश्नस्यायमाशय इति भावः । स्वाशयं प्रकटीकुर्वन्त्याह—**अहमिति** । "कोऽत्र उत्सारयिता" "तथाभूतः स धर्माद्भ्रश्यति" इति ज्ञानेन न मे

---

१ 'योऽधर्मे आत्मानं विनियोजयति ।' २ न दृश्यते कुत्रचिद्ग्रन्थेषु । ३ दाव (तावद्) । ४ न दृश्यते ।

यौगन्धरायणः—भवति! एवमविज्ञातानि[1] दैवतान्यप्यवधूयन्ते ।

वासवदत्ता—अय्य! तह परिस्समो परिखेदं ण उप्पादेदि जह अअं परिभवो । [ आर्य! तथा परिश्रमः परिखेदं नोत्पादयति यथाऽयं परिभवः । ]

यौगन्धरायणः—भुक्तोज्झित एष विषयोऽत्रभवत्या । नात्र[2] चिन्ता कार्या । कुतः,—

---

किमपि कार्यम् । किंत्वहमपि नाम उदयनस्य महिषी, अवन्तिराजस्य कन्यका, नाम भूत्वापि उत्सारयितव्येति भावः । तथाभूतया यया खलु मया पुरा गतागतप्रसङ्ग उत्सारणाविषये भटा आज्ञप्ताः सैवाहमधुना साधारणजनवदपसारयितव्येत्यहो कालमहिमेत्याशयः ।

**भवतीति**—एवमीदृक्प्रकारेणैव । यथैव त्वद्विषये दृश्यते तथैव । अविज्ञातानि न ज्ञातानि दैवतानि दैवतवत्पूज्या जना देवता वा । अविज्ञाता देवता अप्यवधूयन्ते तिरस्क्रियन्ते, परिभूयन्ते, तत्र का तव कथेत्यपेरर्थः । यथा खलु अश्मखण्डसंकुले नद्यास्तीरे पतितः शालिग्रामः स्नानार्थमागतैर्जनैः पादैरपि हन्यते तथैव तवापि विषय इति दिक् ।

**अय्येति**—तथा तावता परिमाणेन परिश्रमोऽध्वगमनोद्भवः । बहुलमध्वपरिश्रान्ताया अपि तावान्परिखेदो न यावान् समुत्सारणया परिभूताया मम । सैव मामधिकं पीडयतीति भावः । परिभवोऽनादरः । "अनादरः परिभवः परीभावस्तिरस्क्रिया" इत्यमरः । अनादरश्च समुत्सारणेनेति ज्ञेयम् ।

**भुक्तोज्झित इति**—आदौ भुक्तः पश्चादुज्झितः । "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" ( पा० सू० २।१।४९ ) पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्त इति । पूर्वकालज्ञापकं विशेषणमुत्तरकालद्योतकेन विशेषणेन समानाधिकरणेन समस्यते प्रथमस्य च पूर्वनिपातः । स च समासः कर्मधारयः ।

आदौ प्रथमतः पितृगृहनिवाससमये भर्तृगृहनिवाससमये वा भुक्तोऽनुभूतः पश्चादिदानीं कार्यवशतयाऽन्यवेषपरिग्रहात् एष विषयः, उत्सारणापूर्वकं गमनं, उज्झितस्त्यक्तः । समुत्सारणापरिभवेन विमनायमानाया वासवदत्तायाः सांत्वनपरमिदं यौगन्धरायणस्य वचनम् । नात्रेति । न पुनः पुनरेतत् संस्मृत्यात्मा क्लेशनीयः ।

**कुत इति**—अनेनैव हेतुनेत्यर्थः ।

---

१ अनिर्ज्ञा° । २ नात्र भवत्या° ।

२ स० वा०

पूर्वं त्वयाऽप्यभिमतं गतमेवमासी-
च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः ।
कालक्रमेण जगतः परिवर्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥ ४ ॥

भटौ—उस्सरह अय्या ! उस्सरह । [ उत्सरतार्याः ! उत्सरत । ]

( ततः प्रविशति काञ्चुकीयः । )

---

तमेव हेतुं विवृणोति—**पूर्व**मित्यादिना । त्वयाऽपि अधुना समुत्सारणया खिद्यमानयापि । पूर्वं पितृगृहनिवासकाले तथा भर्तृगृहनिवासकालेऽपि । अभिमतमिष्टम् । यथाभिलषितमिति यावत् । एवमिति अत्र दृश्यमानप्रकारेण । गतं गमनं ( कृतं ) आसीत् । समुत्सारणापरैर्भृत्यैस्तथा सखीभिश्चासेव्यमाना त्वमत्र तत्रागच्छः इति भावः ।

न तदधुना परिसमाप्तं किन्तु कालवशात्तस्मादप्यधिकमनुभविष्यसीत्याशयेनाह—**श्लाघ्यमिति** । पुनः उत्तरकाले भर्तुरस्माकं स्वामिनस्ते पत्युर्वा । विजयेन शत्रूणामवस्कंदनेन स्वराज्यसीमावर्धनेन वा प्राप्तेन । श्लाघ्यं स्तुत्यं यथा स्यात्तथा गमिष्यसि गमनमनुभविष्यसि । पूर्वानुभूतादपीष्टतरं गमनं सेविष्यस इति भावः ।

तदेवैतत्सामान्यस्वरूपेणावस्थापयति—**कालक्रमेणेति** । जगतः सर्वेषामपि जन्तूनां भाग्यस्य शुभाशुभकर्मणां पङ्क्तिः परम्परा, तत्प्रभवसुखदुःखादीनां वाऽसौ कालस्य क्रमेण परिपाट्या । चक्रारपङ्क्तिः चक्रस्य अराणां पङ्क्तिरिव परिवर्तमाना भ्रमन्ती गच्छति । सा च यथा कदाचिदधस्तात्कदाचिदुपरि कदाचिन्मध्ये इति अनियमेन गच्छति न तु सर्वथैकस्वरूपेण, तथैव कालभेदेन कदाचित्सुखं कदाचिद्दुःखं जनानां जगति दृश्यते न तु तत्प्रत्येकमेकान्तेनेति भावः । एवमेव च सुखदुःखयोर्वर्णनप्रकारो बहुलं संस्कृतकाव्ये दृश्यते । तथाहि—"कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा । नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण" इत्यादिः । "चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः" इत्यत्रोपमाऽलङ्कारः । "साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः" इति तल्लक्षणात् ( सा० द० ) । अपि च पूर्वार्धगतविशेषस्य उत्तरार्धे सामान्यस्वरूपेण प्रतिपादनात् अर्थान्तरन्यासोऽलङ्कारोऽपि । तल्लक्षणं तु—"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते । यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा" ( का० प्र० ) । वृत्तं वसन्ततिलका । तल्लक्षणम् । "उक्ता वसन्ततिलका तभजा जगौ गः" इति ॥ ४ ॥

**उस्सरहेति**—व्याख्यातपूर्वमिदम् । पुनरपि समुत्सारणोद्घोषणम् ।

काञ्चुकीयस्य प्रवेशमाह—**ततः** इत्यादिना ।

काञ्चुकीयः कञ्चुकी । "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते" ॥ इत्युक्तदिशा स राज्ञोऽन्तःपुरे नियुक्तो विप्रो वृद्धः

**काञ्चुकीयः**—सम्भषक ! न खलु न खलूत्सारणा कार्या । पश्य,—

परिहरतु भवान् नृपापवादं
न परुषमाश्रमवासिषु प्रयोज्यम् ।
नगरपरिभवान् विमोक्तमेते
वनमभिगम्य मनस्विनो वसन्ति ॥ ५ ॥

---

सेवक इति ज्ञायते । तस्य च कञ्चुकधारित्वात्कञ्चुकीति व्यवहारः । कञ्चुकश्च तस्याधिकारपदस्य चिह्नमिति ज्ञेयम् ।

काञ्चुकीयः कञ्चुकीयः कञ्चुकीति सर्वेऽपि शब्दाः पर्यायवाचकाः । काञ्चुकीय इति कञ्चुकशब्दात् "वेणुकादिभ्यश्छण्वाच्यः" इति वार्तिकेन छण् । वेणुकादिराकृतिगणः ।

**सम्भषकेति**—सम्भषक इति उत्सारणापरयोर्द्वयोर्भटयोरेकतरस्य नाम । द्वयोर्मध्ये तस्यैव नामग्रहणेन कञ्चुकिनस्तस्य दृढः परिचयोऽथवा तस्य भटस्य तयोः प्रधानत्वं ज्ञायते ।

**न खल्विति**—संभ्रमाद्द्विर्वचनम् । अनेन कञ्चुकिनोऽप्युत्सारणाविषयेऽरुचिर्ज्ञायते ।

तामेव प्रकटीकुर्वन्नाह—**पश्येति** ।

**परिहरत्विति**—उक्तं विषयं द्वाभ्यां हेतुभ्यां द्रढयति । तत्र प्रथमो हेतुः प्रथमपादे द्वितीयश्च द्वितीये । भवान् त्वम् । संभावनावचनं चानीतिप्रयुक्तस्य सामान्यजनस्य लालनार्थं व्यवहारे प्रयुज्यत इति बहुशो दृष्टचरम् । तथैवेहेति ज्ञेयम् । नृपापवादं नृपे तव स्वामिनि अन्यैः प्रयुज्यमानमपवादं निन्दां परिहरतु परिवर्जयतु । "अवर्णाक्षेपनिर्वादपरीवादापवादवत् । उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इति अमरः । राज्ञि निक्षिप्यमाणस्य दोषस्य त्वं कारणं मा भूरिति भावः । "राज्ञा प्रेरिता वयमुत्सारणापरा" इति प्रमाणीभूते भवद्वचने भवत्प्रेरकत्वेन स एव दोषभाग्भवेत् । "परमपवित्रेऽनागस्याश्रमभूविभागे समुत्सारणां समुपदिशन् कथंभूतोऽयं नृपः" इति दोषस्य स्वरूपं विज्ञेयम् । अथवा नृपस्य अपवादं नृपप्रयुक्तं भवतीति भावः । राज्ञा अतथासमाज्ञप्तस्यापि ते ईदृशं कर्म ज्ञात्वा स कदाचित् कोपं कुर्यात् । तत्र त्वं हेतुर्मा भूरिति । द्वितीयं हेतुमाह—नेत्यादिना । आश्रमवासिषु, विषयश्च सप्तम्यर्थः । तद्विषये परुषं न प्रयोज्यम् । परुषमिति परुषव्यवहारसामान्यद्योतकम् । निष्ठुरो व्यवहारो न कर्तव्य इति यावत् । एतादृशो व्यवहारस्याभूमिः खल्वेते इति भावः । अचिरोक्तसमर्थने हेतुमाह—**नगरेति** । मनस्विनः प्रशस्तं मनोऽस्ति येषां ते प्रशस्तमानसाः, "अस्मायामेधास्रजो विनिः" (पा० सू० ५।२।१२२) इति विनिः । एते तपोवननिवासिनो जना नगरपरिभवान् नगरसुलभान् अनादरान् विमोक्तुं परिहर्तुं वनमभिगम्य प्राप्य वसन्ति वनौकसो भवन्तीति भावः । तथा च

---

१ °परिभवाद्वि ।

**उभौ**—अय्य ! तह । [ आर्य ! तथा । ]

( निष्क्रान्तौ । )

**यौगन्धरायणः**—हन्त सविज्ञानमस्य दर्शनम् । वत्से ! उपसर्पावस्तावदेनम् ।

**वासवदत्ता**—अय्य ! तह । [ आर्य ! तथा । ]

**यौगन्धरायणः**—( उपसृत्य । ) भोः ! किंकृतेयमुत्सारणा ?

**काञ्चुकीयः**—भोस्तपस्विन् !

**यौगन्धरायणः**—( आत्मगतम् ) तपस्विन्निति गुणवान् खल्वयमालापः । (अपरिचयात्तु न श्लिष्यते मे मनसि ।)

---

द्रष्टव्यं—"एते हि हृदयमर्मच्छिदः संसारभावाः, येभ्यो बीभत्समानाः संत्यज्य सर्वान् कामानरण्ये विश्राम्यन्ति मनीषिणः" इति ( उत्तरराम० ) । नगरत्रासान्विहायात्रागतास्तेऽत्रापि त्रस्ताश्चेत् महत्कष्टं स्यात् । क्रुद्धाश्चेत्ते शापादिभिरनिष्टञ्जनयेयुरक्रुद्धाश्च क्षमाप्राधान्याद्भवतोऽपराधिनः पापभाजश्चेत्युभयथाऽपि दोषावहम् ।

वृत्तं पुष्पिताग्रा । तल्लक्षणं च वृत्तरत्नाकरे "अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति ॥ ५ ॥

**अय्येति**—आर्य ! तथा, यथा त्वयादिष्टं तथैव व्यवहराव इति ।

**हन्तेति**—हन्तेति हर्षे । स चोत्सारणानिषेधप्रभवः । "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इति अमरः । विज्ञानं विशिष्टज्ञानं विविच्य ज्ञानं वा तेन सहितं । अस्य काञ्चुकीयस्य दर्शनं दृष्टिरालोचनमीक्षणं वा । सदसद्विवेकशालिन्यस्य बुद्धिरिति तदर्थः । तेन चोपसरणयोग्यः खल्वयमिति ध्वन्यते । तच्चानुपदमेव ज्ञायते ।

**वत्से इति**—वासवदत्तां प्रति संबोधनम् । तां हि स्वभगिनीत्वेन व्यपदिश्यमानस्य तस्य युज्यते तादृस्युक्तिः । अथवा स्वीयवृद्धावस्थानुरूपमपीति तज्ज्ञेयम् । उपसर्पावः समीपं गच्छावः ।

**अय्येति**—तथा, यथा युष्मभ्यं रोचत इति । यौगन्धरायणः समीपं गत्वा तं पृच्छति—भो इति । केन कृता, केन कारणेन वा कृता इयमुत्सारणा । उत्सारणानिदेशदातुर्नाम, केन वा हेतुना धर्मादात्मानमुत्सारत्यसौ इति सर्वमेव श्रोतुमिच्छामीति प्रश्नस्याशयः ।

**भो इति**—तपस्विन्निति परिव्राजकवेषमात्रग्रहणेन परिव्राजकबुद्ध्या तथाभूतं संबोधनम् ।

**आत्मगतमिति**—"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" ( सा० द० ) अश्राव्यमिति परस्य श्रवणायोग्यम् । स्वशब्दश्चात्मवाची । अन्यश्रवणायोग्यं

---

१ साधारणो । २ उपगम्य ।

काञ्चुकीयः—भोः ! श्रूयताम् । एषा खलु गुरुभिरभिहित-नामधेयस्यास्माकं महाराजदर्शकस्य भगिनी पद्मावती नाम । सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्यानुज्ञाता तत्र-भवत्या राजगृहमेव यास्यति । तदद्यास्मिन्नाश्रमपदे वासोऽभिप्रे-तोऽस्याः । तद् भवन्तः,—

तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानि ।
धर्मप्रिया नृपसुता नहि धर्मपीडा-
मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः ॥ ६ ॥

---

स्वस्मिन् चिन्त्यमानमात्मगतमिति तदर्थः । गुणवान्महत्त्वविशिष्टः खलु अयमाला-पोऽस्यामन्त्रणम् । महत्त्वञ्चात्र तपोधनत्वारोपेण । तपश्च सर्वथैवाभ्यर्हितं सर्वेषामिति तथाभूतसंबोधनस्य गुणवत्त्वम् । तु किन्तु अपरिचयात् परिचयाभावात् । परिचयश्च संस्तवः । मे मनसि । न श्लिष्यते संगच्छते । अद्यावधि न केनाप्यहं तथाभूतेन संबो-धनेनामन्त्रित इत्येव हेतोर्मे विचित्रमिवाभाति । श्लिष्यत इति आत्मने पदं चिन्त्यम् ।

**भो इति**—एषा संनिधिं प्राप्ता । गुरुभिर्वृद्धैः पूज्यतमैर्वा । अभिहितं नामधेयं यस्य तस्य । स्वस्वामिनो नाम्नोल्लेखेन स्वस्मिन्नौद्धत्यमापद्येतेति गुरुपदनिवेश इति ज्ञेयम् । महाराजेति संमानार्थकम् । यद्यपि सेवकस्य स्वस्वामिनो नाम्नोल्लेखो दोषाय तथापि अन्योक्त्यनुकरणं नैवेति हृदयम् । महादेवीति दर्शकस्य राज्ञो मातुर्नाम । आश्रमस्थां वृद्धावस्थोचितेन विरक्तवृत्तिस्वीकारेण स्वीकृताश्रमभूविभागाम् । ज्ञायते खल्वनेन यत् न केवलं राजान एव युवराजमभिषिच्य पुरा वानप्रस्थाश्रमं स्वीचक्रुः किन्तु वृद्धावस्थायां भर्तृहीना राज्योऽपि तथेति । राज्ञां तथावस्थानं द्रष्टव्यं—"पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतं । धृतं बाल्ये तदार्येण पुण्यमारण्यकं व्रतम्" ॥ ( उत्तरराम० ) । कादम्बर्यामपि तारापीडः—"पूर्वचिन्तित एवायमर्थो यथा वधूसमेतस्य चंद्रापीडस्य वदनमालोक्य संक्रामितनिजभरेण मया क्वचिदाश्रम-पदे गत्वा पश्चिमं वयः क्षपितव्यमिति" । अभिगम्य मिलित्वाऽनामयं पृष्ट्वा पादवंदनविधिमपि विधायेति वा । तत्रभवत्या पूज्यया महादेव्या । अनुज्ञाता निवर्तस्वेदानीमिति संदिष्टा । राजगृहं मगधराजधानीनाम । आश्रमपदे तपोवनै-कदेशे । वासः अवस्थानं । अभिप्रेत इष्टः ।

**तदिति**—तस्मात्कारणात् । कारणं चात्र पद्मावत्या निवासः । भवन्तः ।

**तीर्थोदकानीति**—तपसो धनानि तपसि उपयुक्तानि । तीर्थगतानि उदकानि ऋषिगणसेवितानि वा, तथा च मेदिनी—"तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु", अमरश्च—"तीर्थमृषिजुष्टजले गुरौ" इति ।

**यौगन्धरायणः**—(स्वगतम्) एवम्। एषा सा मगधराजपुत्री पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति। ततः,—

प्रद्वेषो बहुमानो वा संकल्पादुपजायते।
भर्तृदाराभिलाषित्वादस्यां मे महती स्वता॥ ७॥

---

सर्वेष्वपि धर्मकार्येषु उपयुक्तानि। समिधो यागादौ हूयमानानि काष्ठविशेषाणि। कुसुमानि देवतार्चनयोग्यानि। दर्भान् कुशान् "अस्त्री कुशं कुथो दर्भः पवित्रम्" इत्यमरः। वनादरण्यात् स्वैरं यथेष्टमनिवारितं च उपनयन्तु आहरन्तु।

नात्र कार्ये राजकन्यायाः प्रतिषेध इत्याह—

**धर्मप्रियेति**—धर्मः पुण्याचारः प्रियो यस्याः सा तथाभूता नृपसुता पद्मावती तपस्विषु विषये। धर्मे पीडां बाधां प्रतिबन्धं वा। नहि सर्वथैव न। इच्छेत् कामयेत्। एतत् धर्मबाधेऽनभिलषणम्। अस्याः पद्मावत्याः कुलस्य वंशस्य व्रतं नियमः प्रतिज्ञा वा। कुलपरम्पराप्राप्तः समुदाचारोऽयमिति भावः। वृत्तं वसन्ततिलका। लक्षणं तूक्तमेव॥ ६॥

**एवमिति**—एवं एतन्निमित्तमुत्सारणा क्रियत इति भावः। अथवा एवमित्याश्चर्यदर्शकं। पद्मावती दर्शकस्य भगिनीति बहुशः श्रुता साऽद्याकस्मादत्रावतीर्णा कार्यावतारश्चैतावान् सुलभः सञ्जात इत्याश्चर्यकारणम्। एषा सा इति "सोऽयं देवदत्त" इतिवत् प्रत्यभिज्ञाभिसूचकम्। एषाऽत्र-प्राप्ता सा पूर्वं श्रुता। पुष्पकभद्रादिभिरादेशिकैः दैवज्ञैः ये खलु प्राक्तनं, वर्तमानकालिकं, भविष्यच्च शुभाशुभकर्म जानन्ति अन्येभ्यश्च तत्फलं कथयित्वा तत्प्रतीकारादींश्चोपदिश्य जीविकां कुर्वन्ति तैः। स्वामिन उदयनस्य राज्ञः।

**प्रद्वेष इति**—प्रद्वेषस्तिरस्कारः। बहुमानोऽत्यादरः। वा। संकल्पात् मनोव्यापारात् उपजायते उत्पद्यते। यस्मिन्कस्मिन्नपि वस्तुनीति शेषः। तत्र तिरस्कारेऽत्यादरे वा सर्वथा मनोव्यापार एव कारणम्। एकमेव वस्तु संकल्पभेदात् त्याज्यं ग्राह्यं वा भवतीति भावः। तथाहि—कस्यचिद्धनिकस्य कण्ठे विलसन्तं रत्नहारं वीक्ष्य चौर्यलोलुपमस्माकमन्तःकरणं तं चोरयित्वाऽपि कामयेत् तदेव विरक्तं कृतं चेत् तं लोष्टसमं मन्येत। भर्तुः स्वामिन उदयनस्य दाराः भार्या तत्स्वरूपेण अभिलाषोऽस्यास्तीति भर्तृदाराभिलाषी तत्त्वं तस्माद्धेतोः अस्यां पद्मावत्यां मे महती अनल्पा स्वता आत्मीयता। दारशब्दस्य सर्वदैव पुंसि बहुवचने च व्यवहारः। तथा च अमरः—"पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी। भार्या जायाऽथ पुंभूम्नि दाराः" इति। अधुनैव उत्सारणक्रियायाऽनल्पं मया तिरस्कृतापि भाविनी स्वामिनीति कृत्वा तत्रैवात्मीयता समुत्पन्ना। अत्र च हेतुर्मनोव्यापार एवेति दिक्। अनुष्टुप्। लक्षणं चोक्तमेव॥ ७॥

वासवदत्ता—राअदारिअत्ति सुणिअ भइणिआसिणेहो वि मे एत्थ संपज्जइ । [ राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र सम्पद्यते । ]

( ततः प्रविशति पद्मावती सपरिवारा चेटी च । )

चेटी—एदु[2] एदु भट्टिदारिआ, इदं अस्समपदं पविसदु । [ एत्वेतु भर्तृदारिका । इदमाश्रमपदं प्रविशतु । ]

( ततः प्रविशत्युपविष्टा तापसी । )

तापसी—साअदं राअदारिआए । [ स्वागतं राजदारिकायाः । ]

वासवदत्ता[3]—( स्वगतम् ) इअं सा राअदारिआ । अभिजणाणुरूवं खु से रूवं । [ इयं सा राजदारिका । अभिजनानुरूपं खल्वस्या रूपम् । ]

पद्मावती—अय्ये ! वन्दामि । [ आर्ये ! वन्दे । ]

तापसी—चिरं जीव । पविस जादे ! पविस । तवोवणाणि णाम अदिहिजणस्स सअगेहं । [ चिरं जीव । प्रविश जाते ! प्रविश । तपोवनानि नामातिथिजनस्य स्वगेहम् । ]

---

**राजदारिकेति**—मनुष्यत्वसामान्येन यथा मनुष्यो मनुष्यस्य बन्धुस्तथैव राजदारिकात्वसामान्येनेति भगिनीभावो ज्ञेयः । वासवदत्ताऽपि राजपुत्री साऽपि च तथा । भगिनिकास्नेहोऽपि, न केवलं भर्तुर्द्वितीयोद्वाहार्थं निश्चिता वधूरिति कृत्वा तस्यां सपत्नीभावः किन्तु भगिनीभावोऽपीति । मेऽत्र अस्यां संपद्यते उपजायते । चेटी दासी ।

**तत इति** । उपविष्टस्य प्रवेशनमिति विरोधः । ज्ञातव्यमत्र—नेपथ्यान्तर्गता उपविष्टा तापसी नेपथ्यापनयनेन सर्वेषां दर्शनपथमवतरतीति "प्रविशति"शब्द-स्यार्थः । पात्रप्रवेशस्यायमप्येकः प्रकार इत्यवगन्तव्यम् ।

**साअदमिति**—राजदारिकाया राजकुमार्याः । स्वागतं शुभागमनम् ।

**इअमिति**—सा इति काञ्चुकीयकथिता पूर्वं श्रुता वा । अभिजनानुरूपं अन्वय-सदृशं । राजवंशे स्तुत्यं इति यावत् । रूपमाकृतिः ।

**अय्ये इति**—तापसीमनुलक्ष्य ।

**चिरमिति**—जाते वत्से । प्रविशशब्दस्य द्विर्वचनेन नात्र शङ्का कार्येत्याप-द्यते । अतिथिजनस्य गृहागतानाम् ।

---

१ यौगन्ध° स्य भाषणस्य पूर्वं कुत्रचित् । २ इदो इदो ( इत इतः ) । ३ इदं भाषणं कुत्रचित् "ततः प्रविशति" इत्यादेः पूर्वं दृश्यते ।

**पद्मावती**—भोदु भोदु । अय्ये ! विस्सत्थम्हि[1] । इमिणा बहुमाणवअणेण अणुग्गहिदम्हि । [ भवतु, भवतु । आर्ये ! विश्वस्तास्मि । अनेन बहुमानवचनेनानुगृहीतास्मि । ]

**वासवदत्ता**—( स्वगतम् ) णहि रूवं एव्व वाआ वि खु से महुरा । [ नहि रूपमेव वागपि खल्वस्या मधुरा । ]

**तापसी**—भद्दे ! इमं दाव भद्दमुहस्स भइणिअं कोच्चि[2] राआ ण वरेदि ? [ भद्रे ! इमां तावद् भद्रमुखस्य भगिनिकां कश्चिद्राजा न वरयति ? ]

**चेटी**—अत्थि राआ पज्जोदो णाम उज्जइणीए । सो दारअस्स कारणादो दूदसंपादं करेदि । [ अस्ति राजा प्रद्योतो नामोज्जयिन्याः । स दारकस्य कारणाद्दूतसंपातं करोति । ]

**वासवदत्ता**—( आत्मगतम् ) भोदु भोदु । एसा अ अत्तणीआ दाणिं संवुत्ता । [ भवतु भवतु । एषा चात्मीयेदानीं संवृत्ता । ]

**तापसी**—अहो खु इअं आइदी इमस्स बहुमाणस्स । उभआणि राअउळाणि महत्तराणि[3] त्ति सुणीअदि । [ अहो खल्वियमाकृतिरस्य बहुमानस्य । उभे राजकुले महत्तरे इति श्रूयते । ]

---

**स्वगेहमिति**—यथा स्वगेहे निःशङ्कं प्रवेशः क्रियते तथैवात्रापीति ।

**भोदु इति** । विश्वस्ता निःशङ्का । जाते इति वात्सल्यपूर्णे आमन्त्रणे तथा आश्रमस्य स्वगेहाभिन्नत्वप्रदर्शने च बहुमानो ज्ञेयः । अनुगृहीता कृपापात्रं कृता ।

**णहीति** । रूपमेव । मधुरमिति योजनीयम् । रूपानुरूपा हि अस्या वाक् भाषणम् । एव च केवलार्थकः ।

**भद्दे इति**—भद्रे इति चेटीं प्रति संबोधनम् । भद्रमुखस्य दर्शकस्य राज्ञः । न वरयति भार्यात्वेन स्वीकरोतीति प्रश्नः । विवाहप्रश्नः साक्षात् वधूवरयोर्लज्जां करोतीति अन्यं प्रति स क्रियते इत्येव हेतोश्चेटीं प्रति तादृशः प्रश्नः ।

**अत्थीति**—दारकस्य कारणात्, अनया सह पुत्रस्य विवाहो भूयादिति हेतोः । दूतसम्पातं दूतसंप्रेषणम् । दूतमुखेन तं घटयितुमिच्छति । अथवा वार्तलिखतत्प्रत्युत्तराहरणे दूतं समये समये प्रेषयतीति ।

**भोदु इति**—आत्मीया आत्मसंबंधिनी । प्रद्योतस्य दारको वासवदत्तायाः भ्राता । संबंधश्च भ्रातृजायात्वेन, स च बुद्धिस्थ एवेति ज्ञेयं न तु वास्तवः ।

---

१ विस्ससिदि ( विश्वसिहि ) । २ को वि ( कोऽपि ) । ३ महत्तराणि ( महद्दि ) ।

पद्मावती—अय्य ! किं दिट्ठो मुणिजणो अत्ताणं अणुग्गहीदुं । अभिप्पेदप्पदाणेण तवस्सिजणो उवणिमन्तीअदु दाव को किं एत्थ इच्छदि त्ति । [ आर्य ! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुम् । अभिप्रेतप्रदानेन तपस्विजन उपनिमन्त्र्यतां तावत्कः किमत्रेच्छतीति । ]

काञ्चुकीयः—यदभिप्रेतं भवत्या । भो भो आश्रमवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः । इहात्रभवती मगधराजपुत्री अनेन विस्रम्भेणोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते ।

कस्यार्थः कलशेन को मृगयते वासो यथानिश्चितं
दीक्षां पारितवान् किमिच्छति पुनर्देयं गुरोर्यद्भवेत् ।
आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया
यद् यस्यास्ति समीप्सितं वदतु तत् कस्याद्य किं दीयताम् ॥८॥

---

अर्हेति—इयं रुचिराऽऽकृतिः अस्य बहुमानस्य प्रद्योतस्य राज्ञः पुत्रोद्वाहार्थं संमतेति स्वरूपस्य अर्हा योग्या । महत्तरे प्रशस्यतरे ।

अय्येति—आर्येति काञ्चुकीयं प्रति । अनुग्रहीतुं अभिलषितप्रदानेन कृतार्थं कर्तुम् । अभिप्रेतप्रदानेन अभिलषितप्रदानप्रतिज्ञयेति यावत् । उपनिमन्त्र्यतां आहूयतां ।

कः किमिति—कस्य किंविषयिणीच्छा वर्तत इति ।

यदिति—अभिप्रेतमिष्टम् । तन्निष्पादयामीति शेषः । भो भो इति उच्चैरामन्त्रणं तपस्विनः प्रति । इह आश्रमपदे । अनेन विस्रम्भेण भवतां प्रणयेन स्नेहेन । "समौ विश्वासविस्रम्भौ" ॥ "विस्रम्भः स्यात्प्रणयेऽपि च "इति अमरः । उत्पादितो जनितो विस्रम्भो विश्वासो यस्यां सा । धर्मायेति धर्मार्थम् । धर्मं निष्पादयितुमिति यावत् । अर्थेन द्रव्येण स्वीयसंपत्त्या, प्रयोजनेन वा । उपनिमन्त्रयते अभ्यर्थयते । आत्मानं धर्मेण युयुक्षुरियं राजकन्यका भवतस्तद्ग्रहणे उन्मुखीकरोतीति भावः ।

कस्येति—कस्य तपस्विजनस्य । कलशेन घटेन । अर्थः प्रयोजनम् । कस्य कस्य वाऽत्र घटस्यावश्यकता वर्तत इति । को वासो वस्त्रं यथानिश्चितं निश्चितमनतिक्रम्येति । निश्चयश्च स्वस्वव्रतानुकूलताप्रदर्शिनि वस्त्रे इति ज्ञेयम् । मृगयते इच्छतीत्यर्थः । तदपि तस्य दीयत इति । दीक्षां वेदाध्ययनादिव्रतं । पारितवान् समापितवान् । गुरोः सकाशाल्लब्धविद्य इति यावत् । तादृशः किं तत् किंस्वरूपं तद् वस्तु

---

१ भवति ! तथा । ( परिक्रम्य ) भोः । २ यद्यस्य° तत्कस्याद्य ।

**यौगन्धरायणः**—( आत्मगतम् ) हन्त दृष्ट उपायः[1]। ( प्रकाशम् ) भोः ! अहमर्थी ।

**पद्मावती**—[2]दिट्ठिआ सहळं मे तवोवणाभिगमणं । [ दिष्ट्या सफलं मे तपोवनाभिगमनम् । ]

**तापसी**—संतुट्ठतपस्सिजणं इदं अस्समपदं । आ[3]अन्तुएण इमिणा होदव्वं । [ संतुष्टतपस्विजनमिदमाश्रमपदम् । आगन्तुकेनानेन भवितव्यम् । ]

---

पुनरिच्छति । यच्छब्देन तच्छब्दस्याक्षेपः । तयोर्नित्यसंबन्धत्वात् । यद् वस्तु । गुरोः उपाध्यायस्य देयं दातुं योग्यं । दक्षिणास्वरूपेणेति भावः । भवेत् । गुरोर्देयमिति कर्मादीनामपि संबन्धमात्रविवक्षायामिति संबन्धसामान्ये "मातुः स्मरति" इतिवत् षष्ठी ज्ञेया । प्रतिज्ञातदाने राजदारिकाया धर्मप्रियत्वं प्रदर्श्य तपस्विजनस्य दृढं विश्वासमुत्पादयति **आत्मेत्यादिना** । धर्मेणाभिरामाः शोभमाना जनास्तेषां प्रिया । अथवा धर्मेऽभिरामः अभिरतिः रुचिर्यस्याः सा प्रिया च । धर्मेण अभिरामा प्रिया चेति वा । सर्वथैव धर्मप्रियेत्यापद्यते । तथाभूताऽसौ नृपजा नृपसुता पद्मावती । आत्मनि अनुग्रहं कृपां । तपस्विभिः अभिलषितवस्तुस्वीकारेण क्रियमाणमित्यर्थः । इच्छति वाञ्छति । अत इति अध्याहार्यम् । यद् वस्तु यस्य तपस्विजनस्य समीप्सितं कांक्षितं । अस्तीति शेषः । तद् वस्तु वदतु कथयतु । स इति शेषः । अद्येति प्रदानस्य समय इदानीमेव न तु अद्य प्रतिज्ञां कृत्वोत्तरकाले तत्प्रदीयतेति सूचितम् । सद्य एव भवतामिच्छां पूरयिष्यतीति भावः । कस्य योग्यस्य तपस्विजनस्य किं किंस्वरूपं वस्तु दीयतामिति प्रश्नः । शार्दूलविक्रीडितं वृत्तम् । लक्षितपूर्वमिदम् ॥ ८ ॥

**हन्तेति**—हन्तेति हर्षे । इष्टकार्येऽनेनोद्घोषणेनामितमानुकूल्यं पश्यतोऽस्य हर्षः । दृष्टोऽभिलक्षित उपायः साधनम् । एवं तावत्करिष्य इति पाठान्तरेण सहापि प्रयत्नाख्या कार्यस्यावस्थोक्ता ।

**प्रकाशमिति**—"सर्वश्राव्यं प्रकाशं स्यात्" ( सा० द० ) । अर्थी याचकः । "वनीयको याचनको मार्गणो याचकार्थिनौ" इति अमरः ।

**दिट्ठिआ इति**—"दिष्ट्या समुपजोषं चेत्यानन्दे" इत्यमरोक्तदिशा दिष्ट्येति हर्षद्योतकमव्ययम् । सफलं फलेन प्रयोजनेन सहितं । निरीहतपोधनव्याकुलेऽत्राश्रमपदे याचकशब्दश्रवणादित्यर्थः ।

**संतुट्ठेति**—संतुष्टस्तृप्तो वनसुलभवस्तुप्राप्तिप्रमुदितमानसोऽत एव विगतस्पृहस्तपस्विजनो यस्मिंस्तत्, तथाभूतमिदं आश्रमपदमाश्रमभूविभागः । ज्ञायते

---

१ °उपायः । भवतु, एवं तावत्करिष्ये । २ अत्रके दिट्ठिआ । ३ °न्तुएणा वि° ।

काञ्चुकीयः—भोः ! किं क्रियताम् ?

यौगन्धरायणः—इयं मे स्वसा । [1]प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या कञ्चित्कालं परिपाल्यमानाम् । कुतः,—

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रै-
र्नाहं काषायं वृत्तिहेतोः प्रपन्नः ।
धीरा कन्येयं दृष्टधर्मप्रचारा
शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥ ९ ॥

---

खल्वनेन वचनेन तस्या वृद्धतापस्याः सर्वैरपि साकं परिचयस्तथा तत्परिचर्याज्ञानमपि । याचकवृत्तेर्नामापि नात्रेत्यभिमानश्च स्तुत्य इति हृदयंगमम् । आगन्तुकेन प्राघूर्णकेन विदेशादत्रागतेन अनेन याञ्चाकृता भवितव्यम् ।

भो इति—किं क्रियताम्, किं तद्भवतोऽभिलषितं यद्राजदारिकया पद्मावत्या पूरणीयमिति ।

इयमिति—स्वसा भगिनी । प्रोषितभर्तृका प्रोषितो दूरदेशं गतो भर्ता यस्यास्ताम् । "नद्यृतश्च" (पा० सू० ५।४।१५३) इति कप् । प्रोषितभर्तृकाया लक्षणं तु **साहित्यदर्पणे**—"नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः । सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका" इति । इमाम् । अत्रभवत्या पद्मावत्या । परिपाल्यमानां परिरक्ष्यमाणाम् । इच्छामि । इदमेव मेऽभिलषितमिति भावः । तत्र हेतूपन्यासं च कुरुते—

**कार्यमिति** । अर्थैर्द्रव्यादिभिः । कार्यं प्रयोजनं नैव सर्वथैव नेत्यर्थः । न मे द्रव्यादिकस्याभिलाषा आवश्यकता वा । भोगैरपि उपभोग्यैर्घटादिभिरपि( मे ) कार्यं न । तत्रापि न मेऽभिलाषा । वस्त्रैरपि न । कार्यमित्यनुषज्यते । अहं काषायं कषायेण रक्तं वस्त्रं । "तेन रक्तं रागात्" (पा० सू० ४।२।१) इति अण् । रज्यतेऽनेनेति रागः । कषायेण रक्तं वस्त्रं काषायम्, माञ्जिष्ठम् इत्यादि । वृत्तिर्जीविका तदर्थं । न प्रपन्नः, न स्वीकृतवान् । नाहं तेषु मध्ये कश्चिदेको ये खलु केवलमुपजीविकार्थं तान् तान् वेषान् गृहीत्वा आत्मानं साधुब्रुवान् कुर्वन्तीति साटोपं वचनमिदं यौगन्धरायणस्येति ज्ञेयम् । अनेन तस्मिन्नपि काले इदानीमुपलभ्यमाना इव साधुब्रुवा आसन्निति कल्प्यते । धीरा प्राज्ञा । दृष्टो धर्मस्य प्रचारो विस्तारः, तत्त्वानीति यावत्, यया सा । इयं कन्या पद्मावती मे भगिन्याः चारित्रं शीलं रक्षितुं शक्ता समर्था । नाहं पद्मावतीं विहायान्यत्स्थलं तादृशं योग्यं पश्यामि यत्र तस्याः शीलं रक्षितं भवेत् । अहं च तया सह देशाद्देशान्तरं यदि पर्यटामि तदा न जाने कदाचित् कुत्रचित्तच्छीलं स्खलितं भवेदिति गूढार्थः ।

---

१ प्रोषित° का । इमाम्° ॥

**वासवदत्ता**—( आत्मगतम् ) [1]हं ! इह मं णिक्खिविदुकामो [2]अय्ययोगन्धरायणो । होदु, [3]अविआरिअ कमं ण करिस्सदि । [ हम् ! इह मां निक्षेप्तुकाम आर्ययौगन्धरायणः । भवतु, अविचार्य क्रमं न करिष्यति । ]

**काञ्चुकीयः**—भवति ! महती खल्वस्य व्यपाश्रयणा । कथं प्रतिजानीमः ? कुतः,—

सुखमर्थो भवेद्दातुं सुखं प्राणाः सुखं तपः ।
सुखमन्यद्भवेत्सर्वं दुःखं न्यासस्य रक्षणम् ॥ १० ॥

**पद्मावती**—अय्य ! पढमं उग्घोसिअ को किं [4]इच्छदि त्ति अजुत्तं दाणिं विआरिदुं । जं एसो [5]भणादि तं अनुचिट्ठदु अय्यो । [ आर्य ! प्रथममुद्घोष्य कः किमिच्छतीत्ययुक्तमिदानीं विचारयितुम् । यदेष भणति तदनुतिष्ठत्वार्यः । ]

---

वैश्वदेवी वृत्तम् । तल्लक्षणं च "बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ।" इति ॥ ९ ॥

**हमिति**—हमिति विषादे । इह पद्मावत्यां निक्षेप्तुं न्यासत्वेन तत्स्वाधीनां कर्तुं कामोऽभिलाषो यस्य सः । भवत्वित्यादिना विषण्णायास्तस्याः स्वस्य स्वेन सान्त्वनम् । अविचार्य पूर्वं विचारं न कृत्वा । क्रमं विधानं न करिष्यति । "कल्पे विधिक्रमौ" इत्यमरः । दूरदृष्टिरयं सहसा किमपि कार्यं नाङ्गीकरिष्यति । अत्र कोऽपि हेतुस्तस्य भवेदेव । अतो न मया विषादः स्वीकार्य इति भावः ।

**भवतीति**—भवतीति पद्मावतीं प्रति । अस्य याचकस्य । व्यपाश्रयणा अर्थना । महती दुःसाध्या खलु । तत् कथं प्रतिजानीमः प्रतिशृण्मः, पूरयाम इति स्वीकुर्मः । तत्र हेतुजिज्ञासां "कुतः" इत्यनेन उत्थाप्य तं वक्ति—

**सुखमिति**—अर्थो द्रव्यं सुखं यथा स्यात्तथा दातुमर्पयितुं भवेत् । शक्य इति शेषः । न तत्र तावान्क्लेश इति भावः । प्राणा अपि सुखं दातुं ( शक्याः ) भवेयुः । भवेयुरिति वचनपरिणामः । तपः सुखं ( दातुमित्यनुषज्यते ) ( शक्यं ) भवेत् । अन्यत् सर्वमपि सुखं दातुं ( शक्यं ) भवेत् । किन्त्विति अध्याहार्यम् । न्यासस्य निक्षेपस्य रक्षणं संगोपनं दुष्करं कष्टसाध्यम् । प्राणदानादेरपि न्यासरक्षणं कष्टतरमिति भावः । अत्र सुखमिति पदस्य चतुःकृत्वः प्रयोगोऽनवीकृतत्वं प्रदर्शयतीति सूक्ष्मया दृष्ट्या द्रष्टव्यम् । अनुष्टुप् । लक्षितपूर्वेयम् ॥ १० ॥

**अय्येति**—उद्घोष्य घोषणां कृत्वा । शक्यमेतन्न वेति विचारयितुमयुक्तमनुचितम् । अनुतिष्ठतु करोतु । अन्यथा सत्यप्रतिज्ञताहानिर्दोष आपद्येतेति भावः ।

---

१ हा । २ अय्यो इति केवलम् । ३ स अवि° । ४ पत्थ इच्छ° ( अत्र इच्छ° ) । ५ आणवेदि ( आज्ञापयति ) ।

काञ्चुकीयः—अनुरूपमेतद्भवत्याभिहितम् ।

चेटी—चिरं जीवदु भट्टिदारिआ एव्वं सच्चवादिणी । [ चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी । ]

तापसी—चिरं जीवदु भद्दे । [ चिरं जीवतु भद्रे । ]

काञ्चुकीयः—भवति ! तथा । ( उपगम्य ) भोः ! अभ्युपगतमत्रभवतो भगिन्याः परिपालनमत्रभवत्या ।

यौगन्धरायणः—अनुगृहीतोऽस्म्यत्रभवत्या । वत्से ! उपसर्पात्रभवतीम् ।

वासवदत्ता—( आत्मगतम् ) का गई । एसा गच्छामि मन्दभाआ । [ का गतिः । एषा गच्छामि मन्दभागा । ]

पद्मावती—भोदु भोदु । अत्तणीआ दाणिं संवुत्ता । [ भवतु भवतु । आत्मीयेदानीं संवृत्ता । ]

तापसी—जा ईदिसी से आइदी इयं वि राअदारिअ त्ति तक्केमि । [ या ईदृश्यस्या आकृतिः, इयमपि राजदारिकेति तर्कयामि । ]

---

**अनुरूपमिति** । अनुरूपं योग्यम् । अनुरूपता चात्र उदारस्वभावकुलसमुदाचारादिनिरूपतेति । अभिहितं उक्तम् ।

**चिरमिति**—एवं ईदृक्प्रकारेण सत्यवादिनी सत्यभाषणस्वभावा । चिरं जीवत्विति आशीर्वचनम् ।

**चिरमिति**—भद्रे इति चेटीं प्रति संबोधनम् । त्वत्प्रयुक्तमाशीर्वचनं पात्रे एवेति ममापि तत्रानुमतिः इति तदाशयः ।

**भवतीति**—तथा, यथा त्वया समाज्ञप्तं तथा करोमीति । उपगम्य यौगन्धरायणस्य समीपं गत्वा । अत्रभवतः श्रेष्ठस्य ते । अभ्युपगतं स्वीकृतम् ।

**अनुगृहीत इति**—अनुगृहीत उपकृतः । अत्रभवत्या पद्मावत्या । वत्से इति वासवदत्तां प्रति संबोधनम् । उपसर्प समीपं गच्छ ।

**केति**—गतिरुपायः । कार्यवशाद्देशाद्देशान्तरं पर्यटन्त्या मम यौगन्धरायण एवालम्बनमासीत्सोऽप्यधुना मामिहापरिचिते स्थले त्यक्त्वान्यत्र गच्छतीति तस्या विषादः । तस्य वचनस्य सर्वथैव ग्राह्यतया तद्विना गत्यन्तरं नास्तीति भावः । मन्दो भागो भाग्यं यस्याः सा मन्दभागा दुर्भाग्या । "भागो रूपार्धके भाग्यैकदेशयोः" इति हैमः ।

**भोदु इति**—आत्मीया आत्मसंबंधिनी । यथाऽऽत्मसंबन्धिनः कस्यचित् संरक्षणं कर्तव्यत्वेनापतति तथैवास्या अपीति तन्मया स्वीकृतमित्याशयः ।

**जेति**—या ईदृशी महानुभावा अस्या याचकभगिन्या आकृतिरङ्गसौष्ठवं

**चेटी**—सुट्ठु अय्या भणादि । अहं वि अणुहूदसुहत्ति पेक्खामि । [ सुष्ठु आर्या भणति । अहमप्यनुभूतसुखेति पश्यामि । ]

**यौगन्धरायणः**—( आत्मगतम् ) हन्त भोः ! अर्धमवसितं भारस्य । यथा मन्त्रिभिः सह समर्थितं तथा परिणमति । ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति । कुतः,—

पद्मावती नरपतेर्महिषी भवित्री
दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा ।
तत्प्रत्ययात्कृतमिदं न हि सिद्धवाक्या-
न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ॥ ११ ॥

---

अवयवसंस्थानं वा । इयमपि । यथा पद्मावती तथैवेयमिति पद्मावतीसंग्रहकृत् अपिशब्दो विज्ञेयः ।

तर्कयामि अनुमिनोमि । अनुमाने च पूर्वार्धं लिङ्गपरमिति ज्ञेयम् । तापस्या अनुमानं स्वस्यापि संमतमिति चेटी वदति—

**सुट्ठु इति**—अनुभूतं सुखं ( सुखाधिक्यं, प्रासादे लभ्यमानं सुखमिति यावत् ) यया सा तथाभुता । इयमिति योजनीयम् । इति पश्यामि अनुमिनोमि ।

**हन्तेति**—हन्त भो इति हर्षे । हर्षश्च कार्यांशनिष्पन्नताप्रभवः । भारस्य अङ्गीकृतस्य महतः कार्यस्य अर्धं अर्धभागोऽवसितं निष्पन्नम् । कार्यस्यार्धभाग इति वासवदत्तायाः पद्मावतीनिकटे न्यासः, अवशिष्टश्च पद्मावत्युदयनयोर्विवाह इति ज्ञेयम् । यथा येन स्वरूपेण मन्त्रिभिः रुमण्वदादिभिः सह समर्थितं मन्त्रितं, विचारितं । इतो गत्वैतानि कार्याणि संपादनीयानीति सुनिश्चितमिति यावत् । तथा तेनैव प्रकारेण परिणमति फलरूपत्वं प्राप्नोति । एतत्सर्वमप्यस्माकं सुदैवादेवाकल्पितं घटतीत्यभिप्रायः । तस्याः समीपमेव न्यासीकरणेनापरमपि साध्यत इति आह—**तत** इत्यादि । ततोऽनन्तरम् । स्वामिनि उदयने । प्रतिष्ठिते शत्रुतः स्वराज्यं विनिर्जित्य स्थिरीभूते सति । तत्रभवतीं वासवदत्तां उपनयतः तत्समीपं प्रापयतो मे । इह वासवदत्ताविषये अत्रभवती मगधराजपुत्री पद्मावती विश्वासस्य स्थानं कारणं भविष्यति । विश्वासश्च प्रत्ययः । "भवत इयं भार्या मत्समीपमद्ययावदासीत् । सा च शुद्धा सच्छीला च" इत्यादिकथने साक्षिणी भूयादिति तदर्थः ।

**पद्मावतीति**—पद्मावती नरपतेः उदयनस्य महिषी कृताभिषेका पत्नी भवित्री भविष्यति । "कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः" इत्यमरः । दैवज्ञा-

---

१ रपि । २ न्युत्क्रम्य ।

( ततः प्रविशति ब्रह्मचारी । )

**ब्रह्मचारी**—( ऊर्ध्वमवलोक्य ) स्थितो मध्याह्नः । दृढमस्मि परिश्रान्तः । अथ कस्मिन्प्रदेशे विश्रमयिष्ये । ( परिक्रम्य ) भवतु, दृष्टम् । अभितस्तपोवनेनानेन भवितव्यम् । तथाहि—

[1]विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया[2]
वृक्षाः पुष्पफलैः समृद्धविटपाः[3] सर्वे दयारक्षिताः ।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसंदिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥ १२ ॥

---

दिष्टस्य वस्तुन उल्लेखोऽयम् । निश्चयेन भविष्यतीत्यत्र कारणान्याह—**दृष्टेति** । यैः दैवज्ञैः प्रथमं पूर्वं प्रदिष्टा आगामिनि काले भविष्यतीति प्रदर्शिता विपत्तिः स्वामिनः शत्रोराक्रमणस्वरूपा तद्राज्यहरणरूपा चापत् दृष्टा सत्यत्वेन ज्ञाता । अस्माभिरिति शेषः । तेषु दैवज्ञेषु प्रत्ययात् विश्वासात् । तत्कथितवाक्यविश्वासाद्धेतोरिति यावत् । यथा नरपतिविषये सत्यमभूत्तथैवेदमपि भूयादेवेति विश्वासादित्यर्थः । इदं वासवदत्तायाः पद्मावत्या कार्यं संगोपनकार्यं कृतं । किं तत्रैतावान्विश्वासः प्रदृश्यत इत्यत आह—**न हीति** । विधिः भागधेयम् । सुपरीक्षितानि सम्यग्रीत्या परीक्ष्य परीक्ष्योच्चारितानि सिद्धानां त्रैकालिकज्ञानवादिनां वाक्यानि उत्क्रम्य उल्लंघ्य न गच्छति अपि तु सर्वथैव तदनुसर्येव स इति । अर्थान्तरन्यासोऽलङ्कृतिः । दैवज्ञैः प्रदिष्टा विपदः अवितथा एव निष्पन्ना इति विशेषस्य न हीत्यादिना सामान्यस्वरूपेण प्रतिपादनात् । लक्षणमुक्तमेव । वृत्तं वसन्ततिलिका । लक्षितपूर्वेयम् ॥ ११ ॥

ब्रह्मचारिणः प्रवेशमाह—**तत** इत्यादिना । तस्य च प्रवेशस्य सर्वपरिस्थितिनिरूपणपूर्वकेन उदयनगुणगणपरिसंख्यानेन तत्र च पद्मावत्या उन्मुखीकरणेन महत्त्वं ज्ञेयम् । ब्रह्म वेदः । तदध्ययनार्थं व्रतमप्युपचाराद्ब्रह्म । ब्रह्म चरितुं शीलमस्येति ब्रह्मचारी । "व्रते" ( पा० सू० ३।२।८० ) इति "सुप्यजातौ णिनिस्ताच्छील्ये" ( पा० सू० ३।२।७८ ) इति वा णिनिः ॥

**ऊर्ध्वमिति**—वेलापरिज्ञानाय । पुरा खलु घटीयन्त्रादिकस्याभावात्सूर्यपरिस्पन्दादिभिरेव वेलाऽज्ञायत । मध्यं अह्नः मध्याह्नः । "अह्नोऽह्न एतेभ्य" ( पा० सू० ५।४।८८ ) इत्यादिना अहन् शब्दस्य अह्नादेशः । स्थितः सञ्जातः । दृढं अतीव परिश्रान्तः क्लान्तः । अस्मीति शेषः । विश्रमयिष्ये खेदपरिहारं करिष्ये । स्वार्थे णिच् । परिक्रम्य कानिचित्पदानि गत्वा । भवतु, दृष्टं । विश्रान्तिस्थानमिति शेषः । भवितव्यमित्यनुमानम् । तत्र लिङ्गं वक्ति—**विस्रब्धमिति** । देशागतप्रत्ययाः देशे तद्विषये आगतः प्राप्तः प्रत्ययो विश्वासो येषां ते । निर्भयमेतत्स्थलमिति सर्वथैव विश्वस्ता इत्यर्थः । अत एव, अचकिताः भीत्यादिभावविवर्जिताः स्तब्ध-

---

१ विस्रब्धाः । २ प्रत्ययात् । ३ विभवाः ।

यावत्प्रविशामि । (प्रविश्य) अये ! आश्रमविरुद्धः खल्वेष जनः । (अन्यतो विलोक्य) अथवा तपस्विजनोऽप्यत्र । निर्दोषमुपसरणम् । अये ! स्त्रीजनः ।

---

चित्ता इति यावत् । वन्येषु पशुषु कारणलेशेनापि त्रस्यमानत्वं चकितीभवनं वा हरिणेष्वेव दृश्यते, तच्च तेषां स्वभाव एव । नैकवारं दृढाभ्यासेन चैकत्र विश्वस्तास्ते तत्र निर्भयं संचरन्तीति कृत्वा तेषां तदानीं दृष्टो दृढो देशविशेषे विश्वास एव तस्याश्रमानुमाने लिङ्गम् । विस्रब्धं विस्रंभेण सहितं यथा स्यात्तथा निःसंदेहमिति । चरन्ति इतस्ततः परिभ्रमन्ति । सर्वे वृक्षाः पुष्पफलैः समृद्धविटपाः समृद्धाः परिपूर्णाः संपन्ना वा विटपाः शाखा येषां ते तथाभूताः । नात्र केनापि स्वात्मार्थं पुष्पापहरणं प्रसाधनहेतोः कृतं तथा उदरपूरणाय च फलापहरणमिति । अपि च दयया वात्सल्येन रक्षिताः संगोपिताः । आलवालानि सततं जलेन परिसिच्य पुष्पफलानपहारं कृत्वा पालिता इति । कपिलानि पिङ्गलवर्णानि गवां धेनूनां कुलानि समुदायाः । तानि धनानीव । यज्ञहोमादिकार्ये तासां नियतावश्यकतया तदर्थं च तासामवश्यं कष्टरक्ष्यतया च धनानीति व्यवहारः । (अत्र) भूयिष्ठं बाहुल्येन । संन्ति, परिदृश्यन्त इति वा शेषः । "कपिला रेणुकायां च शिंशपागोविशेषयोः । पुण्डरीककरिण्यां स्त्री वर्णभेदे त्रिलिङ्गकम्" इति मेदिनी । "कपिलवर्णपर्यायश्च अमरे—"कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ" इति । अतोऽपि तस्य स्फुटं रूपं शब्दार्णवे सुस्पष्टतया ज्ञायते । तथाहि—"सितपीतहरिद्रक्तः कडारस्तृणवह्निवत् । अयन्तूद्रिक्तपीताङ्गः कपिलो गोविभूषणः" इति । दिश इत्यस्य प्रदेशार्थद्योतकत्वं, क्षेत्रशब्दसंप्रयोगादिति ज्ञेयम् । आशासु सर्वथैव क्षेत्राणामसंभवादिति । तेनासमन्तात्परिदृश्यमानाः प्रदेशा इति तदर्थः । न क्षेत्रवत्यः क्षेत्रपरिहीनाः । ग्रामसमीपवर्तिनां तत्सम्बन्धिनामेव तथाभूतत्वादिति दिक् । ग्रामीणास्तु क्षेत्रेषु बीजावापं कृत्वा धान्यमुत्पाद्य जीविकां कुर्वन्ति, स प्रकारोऽत्र न दृश्यत इत्यतस्तपोवनभूरियमित्यनुमानम् । इदं पुरो दृश्यमानम् । निःसंदिग्धं अत्र संदेहावकाशो नेत्यर्थः । तपोवनं तपोभूविभागः । अयं दृश्यमानो धूमो बह्वाश्रयः, बहवः आश्रया उत्पत्तिस्थानानि प्रवृत्तयज्ञादिभूविभागा यस्य स तथाभूतः, वर्तत इति शेषः । बहुस्थानेभ्योऽस्योद्गमो दृश्यत इत्यर्थः । अत्र चतुर्थपादस्योत्तरो विभागः "अयमित्यादिः" वाक्यस्य समाप्तावपि पुनरात्त इति समाप्तपुनरात्तताऽनुसंधेया । वृत्तं शार्दूलविक्रीडितम् । लक्षणमुक्तमेव ॥ १२ ॥

**यावदिति**—प्रविशामि । आश्रमपदमिति शेषः । अये इति साश्चर्योद्गारः । आश्चर्यं च कञ्चुकीदर्शनसंभवमिति ज्ञेयम् । आश्रमस्य विरुद्धः असम्बद्ध इति यावत् । एष जनः काञ्चुकीयः । आश्रमे काञ्चुकीयदर्शनेन स्वानुमानं व्यभिचरितं वेति परिज्ञानाय पुनः सर्वतोऽवलोकयति । तद्भावप्रदर्शकमेव अन्यत इति । अथवा तपस्विजनोऽपि परिव्राजकस्तापसी च अत्र, न केवलमयं काञ्चुकीयो नगरनिवासी जनः । निर्दोषमुपसर्पणम्, प्रवेशने दोषो नास्तीति भावः । अये इति पुनः

काञ्चुकीयः—स्वैरं स्वैरं प्रविशतु भवान् । सर्वजनसाधारण-माश्रमपदं नाम ।

वासवदत्ता—हम् ।

पद्मावती—अम्मो परपुरुसदंसणं परिहरदि अय्या । भोदु, सुपरिवाळणीओ खु मण्णासो । [ अम्मो परपुरुषदर्शनं परिह-रत्यार्या । भवतु, सुपरिपालनीयः खलु सन्न्यासः । ]

काञ्चुकीयः—भोः । पूर्वं प्रविष्टाः स्मः । प्रतिगृह्यतामति-थिसत्कारः ।

ब्रह्मचारी—( आचम्य ) भवतु भवतु । निर्वृत्तपरिश्रमोऽस्मि ।

यौगन्धरायणः—भोः ! कुत आगम्यते, क्व गन्तव्यं, क्वाधिष्ठा-नमार्यस्य ?

ब्रह्मचारी—भोः ! श्रूयताम् । राजगृहतोऽस्मि । श्रुतिविशे-षणार्थं वत्सभूमौ लावाणकं नाम ग्रामस्तत्रोपितवानस्मि ।

---

शयाश्चर्योद्गारः । स चाश्रमे स्त्रीजनसंदर्शनात् । स्त्रीजन इत्युक्तिर्वासवदत्तां पद्मावतीं च दृष्ट्वेति ज्ञेयम् ।

**स्वैरमिति**—स्वैरं स्वच्छन्दम् । प्रवेशे शङ्का न कार्येत्यर्थः । सर्वेषां जनानां साधारणं प्रवेशयोग्यम् । नामेतिपदेन सामान्यतो निर्देशो ज्ञेयः । तेन च नेदमेव केवलं किन्तु सर्वाण्यप्याश्रमपदानि सर्वजनप्रवेशयोग्यानीत्यर्थ आपद्यते ।

**हमिति**—परपुरुषसंदर्शनं परिजिहीर्षन्त्या वासवदत्ताया असम्मतौ उक्तिः ।

**अम्मो इति**—अम्मो इति समाधाने । परिहरति वर्जयति । सुपरिपालनीयः सुखेन संरक्षणीयः । नातिक्लेशो मया कार्योऽस्याः संरक्षणे, यतो या स्वयमेव स्वरक्षणे एतावद्यतत इति भावः । मन्न्यासो वासवदत्तास्वरूपः ।

**भो इति**—पूर्वम् । भवत इति शेषः । प्रविष्टाः स्मः । अस्माकमवस्थानमत्र भवतोऽप्यधिकतरमिति भावः । अतोऽस्माकमप्यतिथिसत्कारेऽधिकार इत्यत आह—प्रतिगृह्यतामिति ।

**आचम्येति**—आचम्य काञ्चुकीयोपनीतेन जलेन आचमनं कृत्वेत्यर्थः । ज्ञायतेऽनेन यदतिथिसत्कारे आचमनं प्रथमो विधिरासीदिति । भवतु, नातःपरं पुनरधिक उपचारो भूयादिति भावः । निवृत्तोऽपगतः परिश्रमः अध्वखेदो यस्य ।

**भो इति**—अधिष्ठानं निवासः ।

**भो इति**—राजगृहतः तदाख्यमगधराजधान्याः । अस्मि । आगत इति शेषः । अथवा अस्मीति अहंप्रतिरूपकमव्ययम् । श्रुतौ आम्नाये विशेषणं वैशिष्ट्यं तदर्थम् ।

**वासवदत्ता**—( आत्मगतम् ) हा ! लावाणअं णाम । लावाण-असंकित्तणेण पुणो णवीकिदो विअ मे सन्दावो । [ हा लावाणकं नाम ! लावाणकसंकीर्तनेन पुनर्नवीकृत इव मे सन्तापः । ]

**यौगन्धरायणः**—अथ भोः ! परिसमाप्ता विद्या ?

**ब्रह्मचारी**— न खलु तावत् ।

**यौगन्धरायणः**—यद्यनवसिता विद्या, किमागमनप्रयोजनम् ?

**ब्रह्मचारी**—तत्र खल्वतिदारुणं व्यसनं संवृत्तम् ।

**यौगन्धरायणः**—कथमिव ?

**ब्रह्मचारी**—तत्रोदयनो नाम राजा प्रतिवसति ।

**यौगन्धरायणः**—श्रूयते तत्रभवानुदयनः । किं सः ?

**ब्रह्मचारी**—तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता किल ।

---

वेदगतविशिष्टज्ञानसंपादनार्थमिति भावः । "श्रुतिः श्रोत्रे तथाऽऽम्नाये वार्तायां श्रोत्रकर्मणि" इति विश्वः । वत्सभूमौ लावाणकं नाम ग्रामः । योऽस्तीति शेषः । तत्र तस्मिन्ग्रामे उषितवानस्मि । मे निवास आसीदित्यर्थः ।

**हेति**—हा इति खेदे । लावाणकं नाम, स एव खलु ग्रामो यत्र शत्रुणा निष्कासिता वयं न्यवसाम इति तद्भावः । लावाणकसंकीर्तनेन तन्नामग्रहणेन । नवीकृतः, न नवः अनवः, अनवः नवः कृतः । सन्तापः शत्रुजितस्वराज्यश्रवणोद्भूतः प्रियजनविरहोद्भवश्चेति ज्ञेयम् ।

**अथेति**—अथ भो इति प्रश्नः ।

**नेति**—न खलु, नैव तावत् । परिसमाप्ता इति शेषः ।

**यदीति**—अनवसिता अपरिसमाप्ता । आगमनस्य, तं ग्रामं त्यक्त्वाऽत्र आगमनस्य । प्रयोजनं कारणम् । किम् । तत्र दृढेन कारणेन भवितव्यमध्ययनत्यागे इति भावः ।

**तत्रेति**—अतिदारुणं अतिघोरम् । व्यसनमापत् । "व्यसनं विपदि भ्रंशे" इत्यमरः ।

**कथमिति**—किंप्रकारकं तद्व्यसनं सर्वं कथ्यतामिति भावः ।

**तत्रेति**—तत्र लावाणकग्रामे ।

**श्रूयत इति**—श्रूयते, ज्ञायते इति तदर्थः । किं सः । स उदयनः । किं तस्य वृत्तमिति प्रश्नस्यार्थः ।

**तस्येति**—[illegible] अभिप्रेता प्रियतमा ।

**यौगन्धरायणः**—भवितव्यम् । ततस्ततः ।

**ब्रह्मचारी**—ततस्तस्मिन्मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा ।

**वासवदत्ता**—( आत्मगतम् । ) अळिअं अळिअं खु एदं । जीवामि मन्दभाआ । [ अलीकमलीकं खल्वेतत् । जीवामि मन्दभागा । ]

**यौगन्धरायणः**—ततस्ततः ।

**ब्रह्मचारी**—ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिवस्तस्मिन्नेवाग्नौ पतितः ।

**यौगन्धरायणः**—सत्यं पतित इति ? ततस्ततः ।

**ब्रह्मचारी**—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसन्तापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः ।

**वासवदत्ता**—( आत्मगतम् ) जाणामि जाणामि अय्यउत्तस्स मइ साणुक्कोसत्तणं । [ जानामि जानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम् । ]

---

**भवितव्यमिति**—भर्तारं प्रति पत्न्या तु प्रियतमयैव भाव्यमिति निसर्ग एवेति भावः । ततस्तत इति उदयनवृत्तश्रवणाय त्वरावचनम् ।

**तत इति**—मृगयाप्रयोजनेन निष्क्रान्ते बहिर्गते सति । ग्रामस्य लावाणकस्य दाहः प्रज्वलनं तस्मिन् ।

**अळिअमिति**—अलीकं मिथ्यावचनम् । द्विर्वचनं च दार्ढ्यापादनायेति ज्ञेयम् ।

**ततस्तत इति**—पुनरपि अवशिष्टकथनार्थं त्वरावचनम् ।

**ततस्तामिति**—तां वासवदत्तां अभ्यवपत्तुं अग्निदाहात्परिरक्षितुं; रक्षणे साहाय्यं कर्तुमिति यावत्, कामोऽभिलाषो यस्य सः । नैव केवलमभिलाषां कृतवान् किन्तु तत्र प्रवृत्त इति । अग्नौ पतितः । तेन भक्षितश्चेति शेषः ।

**सत्यमिति**—सत्यमित्यादिः प्रश्नः । तेन महदनिष्टं सञ्जातमिति स्वभावगोपनपूर्वकोऽन्यान् प्रति कृत्रिमो ध्वनिः ।

**तत इति**—प्रतिनिवृत्तः । मृगयाया इति शेषः । तयोः वासवदत्तायौगन्धरायणयोः । अमात्यैः रुमण्वदादिभिः । वारितः, नेदं ते सदृशं कर्मेति कृत्वा निवारितः ।

**जाणामीति**—अनुक्रोशेन अनुकम्पया सहितः सानुक्रोशस्तस्य भावः । ज्ञायत एव मया तस्य मयि दृढस्नेहः इति भावः ।

यौगन्धरायणः—ततस्ततः ।

ब्रह्मचारी—ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य राजा मोहमुपगतः ।

सर्वे—हा !

वासवदत्ता—( स्वगतम् ) सकामो दाणिं अय्यजोअन्धराअणो होदु । [ सकाम इदानीमार्ययौगन्धरायणो भवतु । ]

चेटी—भट्टिदारिए ! रोदिदि खु इअं अय्या । [ भर्तृदारिके ! रोदिति खल्वियमार्या । ]

पद्मावती—साणुक्कोसाए होदव्वं । [ सानुक्रोशया भवितव्यम् । ]

यौगन्धरायणः—अथ किमथ किम् । प्रकृत्या सानुक्रोशा मे भगिनी । ततस्ततः ।

---

ततस्तत इति—अनन्तरं किमभूदिति जिज्ञासायाम् ।

ततस्तस्या इति—तस्या वासवदत्तायाः शरीरेण उपभुक्तानि, तया विधृतानीति यावत् । दग्धावशेषाणि दग्धानि अवशेषाणि च अर्धदग्धानीति तदर्थः । कस्मिंश्चिद्देशे दग्धानि अपरस्मिंश्चादग्धानीति भावः । अथवा कानिचित्संपूर्णतया दग्धानि तेभ्योऽवशिष्टानि कानिचित्सर्वथैवादग्धानीत्यपि । आभरणान्यलङ्कारान् परिष्वज्यालिङ्ग्य । हृदये धृत्वेति भावः । मोहमुपगतः मूर्च्छितः । अतिप्रियत्वद्योतको व्यवहारोऽयम् ।

हेति—हा इति शोकोद्गारः । स चाप्रियवस्तुश्रवणात् ।

सकामो इति—कामेन सहितः सकामः । कामस्य च स्वरूपं तु, उदयनार्थं पद्मावत्या लाभः शत्रोश्च स्वराज्यस्य प्रत्याहरणमिति । इदानीं ईदृगवस्थाने । अनवस्थिते राजनीत्यर्थः । एवं स्थिते राज्ञि पद्मावतीप्राप्त्या च किं ततः शत्रोः स्वराज्यहरणेन च किमिति भावः । एवं च "सकाम" इति शोकव्याकुलायास्तस्याः सोपालम्भं वचनम् ।

भट्टिदारिए इति—रोदिति खल्वित्यनेन केनाप्यत्र महता कारणेन भवितव्यम्, तच्चान्विष्यतामिति ध्वनिः ।

साणुक्कोसाए इति—अनुक्रोशश्चानुकम्पा, तया सहितयाऽन्वितया । अनयेति शेषः । मसृणं खल्वस्या अन्तःकरणं तत्र कारणं भवेदित्यर्थः ।



अथ किमिति—अथ किं, अथ किमिति तदेव कारणमित्यर्थः । ससंभ्रमे-

ब्रह्मचारी—ततः शनैः शनैः प्रतिलब्धसंज्ञः संवृत्तः ।

पद्मावती—दिट्ठिआ धरइ । मोहं गदो[1] त्ति सुणिअ सुण्णं विअ मे हिअअं । [ दिष्ट्या ध्रियते । मोहं गत इति श्रुत्वा शून्यमिव मे हृदयम् । ]

यौगन्धरायणः—ततस्ततः ।

ब्रह्मचारी—ततः स राजा महीतलपरिसर्पणपांसुपाटलशरीरः सहसोत्थाय[2], हा वासवदत्ते ! हा अवन्तिराजपुत्रि ! हा प्रिये ! हा प्रियशिष्ये ! इति किमपि बहु प्रलपितवान् । किं बहुना,—

नैवेदानीं तादृशाश्चक्रवाका
नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः ।
धन्या सा स्त्री यां तथा वेत्ति भर्ता
भर्तृस्नेहात्सा हि[3] दग्धाऽप्यदग्धा ॥ १३ ॥

---

णोक्तिरियम् । संभ्रमश्च वास्तविकस्याश्रुकारणस्य गोपनार्थमिति ज्ञेयम् । कदाचिच्छोकव्याकुला वासवदत्ताऽऽत्मनि प्रभुत्वं न धारयन्ती सहसा स्वरूपं प्राकट्यं नयेत्, तत्रस्थाञ्जनानपि कीदृश्यपि शङ्का मा स्पृशेदिति च हेतोस्तस्य सम्भ्रमो ज्ञेयः ।

**तत इति**—प्रतिलब्धा संज्ञा चेतना येन सः । शनैः शनैरिति मूर्च्छनायाः प्रभावो दृढ आसीदिति ध्वन्यते ।

**दिट्ठिआ इति**—ध्रियते अवतिष्ठते, जीवतीत्यर्थः । शून्यमिव स्तम्भितमिवेति भावः ।

**ततः स इति**—महीतले परिसर्पणेनावलुण्ठनेन संसक्तैः पांसुभिः पाटलं श्वेतरक्तं, धूसरितमिति यावत्, शरीरं यस्य सः । सहसोत्थायेत्यनेन भूताविष्टस्येवास्य काप्यवस्था संजातेति ध्वन्यते । हा प्रियशिष्ये ! ईदृक्स्वरूपं प्रियपत्नीं प्रत्यामन्त्रणं क्रियमाणमासीदिति ज्ञायते । तथाहि रघुवंशे अजस्य इंदुमतीमुद्दिश्य उक्तिः—"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ" इति । किमपीति । असङ्गतमित्यर्थः । किं बहुना । कथितेनेति शेषः । संक्षेपत एव सर्वं वृत्तं कथयामीत्यर्थः ।

**नैवेति**—इदानीं ईदृश्यामवस्थितौ । तथाभूतं दुःखराशिपराहतमुदयनं वीक्ष्येत्यर्थः । तादृशास्तथाभूताः । उदयनसदृशा इति यावत् । दुःखिता इति शेषः । चक्रवाकाः कोकाः पक्षिविशेषा नैव । स्वदुःखेन चक्रवाकाणां विरहदुःखं तिरस्कृतं

---

१ मोहगदो ( मोहगतः ) । २ उत्थायोत्थाय । ३ साग्निदग्धा ।

**यौगन्धरायणः**—अथ भोः! तं तु पर्यवस्थापयितुं न कश्चिद्यत्नवानमात्यः?

**ब्रह्मचारी**—अस्ति रुमण्वान्नामामात्यो दृढं प्रयत्नवांस्तत्र-भवन्तं पर्यवस्थापयितुम्। स हि,—

अनाहारे तुल्यः सततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन्।

---

तेनेति। तथा दुःखितं तं वीक्ष्य बहुलमपि चक्रवाकाणां विरहदुःखं मनसि पदं न करोतीति भावः। चक्रवाकपक्षिणां तु विरहदुःखं काव्येषु तत्र तत्र सुप्रसिद्धमेव। तथाच शाकुंतले द्रष्टव्यं—"बिसिनीपत्रच्छन्नेन संनिहितेनापि कान्तेन वियुक्तामात्मानं मन्यमाना चक्रवाकवधूर्विचित्रमारौति"। स्त्रीविशेषैः स्त्रीरत्नैरिति। स्त्रीणां विशेषश्च तासां सौन्दर्यमाधुर्यस्मेरवदनकुलशीलादिना गुणजातेनेति ज्ञेयम्। तादृग्गुणगणेन तिरस्कृतान्यस्त्रीभिस्तथाभूताभिरपि वियुक्ता अन्येऽपि जना इतिहासप्रसिद्धाः पुरुषा इत्यर्थः। नैव। तादृशा दुःखिता नाभूवन् यादृशोऽयमिति शेषः। तादृक्स्त्रीवियोगश्च दाशरथेः सीतया, अजस्य इन्दुमत्या, पुरूरवसश्च उर्वश्या, इति तत्र तत्र द्रष्टव्यः। सा स्त्री वासवदत्ता धन्या सुभगा खलु यां भर्ता उदयनस्तथा उक्तप्रकारेण वेत्ति स्मरति। अथवा धन्येत्यादि सामान्यवचनम्। एवं च सा स्त्री या कापि। ध्वन्येति पूर्ववत्। तथा, यथा उदयनविषये दृष्टं तथा। शेषं पूर्ववत्। वासवदत्तायां तादृशमनुरक्तं तं समीक्ष्य ब्रह्मचारिणः प्रशस्तिपूर्वकमिदं वचनम्। तथाभूतामेवोक्तिं परां कोटीं प्रापयन्नाह भर्तृस्नेहादिति। सा वासवदत्ता दग्धा अपि भर्तृस्नेहात् भर्तुः स्वस्मिन् स्नेहाद्धेतोः अदग्धा हि खलु। यद्यपि सत्यमग्नौ विनष्टा तथापि सातिशयेन प्रेम्णा भर्त्रा निर्मितेन शरीरेण सा ध्रियत एवेत्यर्थः। दग्धाऽप्यदग्धेति विरुद्धार्थस्य विच्छित्त्या प्रतिपादनात् विरोधाभासोऽलङ्कारः। तल्लक्षणं "आभासत्वे विरोधस्य विरोधाभास इष्यते" इति। शालिनीवृत्तमिदम्। "शालिन्युक्ता तौ तगौ गोऽब्धिलोकैः" इति तल्लक्षणात्॥ १३॥

**अथेति**—अथ भो इति प्रश्ने। पर्यवस्थापयितुं प्रकृतौ स्थापयितुं। यथा स प्रकृतिमापद्येत तथा कर्तुमिति यावत्। यत्नोऽस्यास्तीति यत्नवान्। अभूदिति शेषः। न कोऽपि तदर्थं प्रयतितवानिति प्रश्नस्य स्वरूपम्। कश्चिच्छब्देनैव पूर्णतायां पुनरपि अमात्यशब्दस्योल्लेखो यौगन्धरायणेन यतः कृतस्तेन ज्ञायते यत् यथामन्त्रितमाचरन्ति न वा रुमण्वदादयोऽमात्या इति ज्ञातुकामोऽयमिति।

**अस्तीति**—दृढं प्रयत्नवान् अस्ति। महतः प्रयासान् करोतीति भावः। स हीत्यस्योत्तरेण श्लोकेनान्वयः।

**अनाहार इति**—अत्राहारे विषये तुल्यः। नृपतिनेति शेषः। अनाहारो भोजनाभावस्तस्मिन्। यथाऽतिदुःखितस्य राज्ञो भोजनेऽरुचिस्तथैव तद्दुःखदुःखि-

---

१ रुमण्वानमात्यो। २ प्रयत्न०।

दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः ॥ १४ ॥

वासवदत्ता—(स्वगतम्) दिट्ठिआ सुणिक्खित्तो दाणिं अय्यउत्तो । [ दिष्ट्या सुनिक्षिप्त इदानीमार्यपुत्रः । ]

यौगन्धरायणः—(आत्मगतम्) अहो महद्भारमुद्वहति रुमण्वान् । कुतः,—

सविश्रमो ह्ययं भारः प्रसक्तस्तस्य तु श्रमः ।
तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः ॥ १५ ॥

---

तस्य तस्यापीति । सततं रुदितेन क्षामं कृशं, निस्तेजस्कमिति यावत्, वदनं यस्य सः । शरीरे संस्कारं । शरीरस्य संस्कार इति तु स्नानादिना, गन्धमाल्यादिना, महार्घवेषालङ्कारादिस्वीकारेण च यथा तद्विभूषितं स्यात्तथा करणमिति । नृपतिना समं दुःखं यस्मिन् कर्मणि तथा तं परिवहन् धारयन् । नृपतिवदनेनापि शरीरसंस्कारो नाद्रियतेति भावः । दिवा वा रात्रौ वा, अहर्निशमिति यावत् । यत्नैः बहुप्रकारकैः प्रयत्नैरिति । नरपतिं राजानं परिचरति तत्परिचर्यां करोति, परिषेवते, शुश्रूषते वा । तथा चामरः—"वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना" इति । नृपतौ तस्य भक्तिप्रकर्षमाह नृप इति । यदि नृपः सद्यः सपदि । "सद्यः सपदि तत्क्षणे" इत्यमरः । प्राणान् त्यजति, अतिप्रवृद्धदुःखेन हेतुनेति भावः । त्यजति त्यक्ष्यतीत्यर्थः । "वर्तमानसामीप्ये वर्तमानवद्वा" (पा० सू० ३।३।१३१) इति वर्तमाने प्रत्ययो वर्तमानसमीपे भविष्यति काले । तदा, आक्षेपलभ्योऽयं यदिशब्दसंप्रयोगात् । अस्य रुमण्वतोऽपि उपरमो जीवनाभावः । भविष्यतीति शेषः ।

द्रष्टव्यमत्र—यत्खलूक्तं रुमण्वतो विषये "अनाहार" इत्यादि तत्सर्वमप्यलीकमेवेति ज्ञातव्यम् । यतो वासवदत्ता न मृतेति तेन सम्यग् ज्ञातमेव । केवलं राज्ञः सन्तोषार्थं तथात्वेन तस्य कृत्रिमो व्यवहार इति न विस्मरणीयम् । शिखरिणीवृत्तमेतत् । तल्लक्षणं च—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति ॥ १४ ॥

**दिट्ठिआ इति**—सुनिक्षिप्तः, शोभने स्थाने निक्षिप्तो न्यस्तः । रुमण्वतो नामग्रहणेनैव तत्र भृशं विश्वस्तायास्तस्याः स्वाश्वासनपरमिदं वचनम् । आर्यपुत्र इति । "सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने" इति भरतः ।

**अहो इति**—महतः स्वराज्यसीमाप्रजापरिपालनादिसुमहत्कर्तव्यं कुर्वाणस्यात एव महत्त्वं प्राप्तस्य, उदयनस्येति यावत् । अथवा महत इति राज्यधुरावहनरूपस्य कार्यस्येति । भारं तादृगतिकष्टं तत्परिपालनादिकार्यम् । उद्वहति सह्यत्वेन धारयतीति भावः । भारस्य स्वरूपं तु, उदयनस्य तद्राज्यस्य च परिपालनं, अहर्निशं तत्परिचर्याकरणं, तद्वृत्त्यनुसरणं चेत्यादि ज्ञेयम् ।

**सविश्रम इति**—अयं भारो वासवदत्तारक्षणस्वरूपः । मया विधृत इति

(प्रकाशम्) अथ भोः! पर्यवस्थापित इदानीं स राजा?

**ब्रह्मचारी**—तदिदानीं न जाने। इह तया सह हसितम्, इह तया सह कथितम्, इह तया सह पर्युषितम्, इह तया सह कुपितम्, इह तया सह शयितम्, इत्येवं विलपन्तं तं राजानममात्यैर्महता यत्नेन तस्माद्ग्रामाद् गृहीत्वाऽपक्रान्तम्[1]। ततो निष्क्रान्ते[2] राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः। ततोऽहमपि निर्गतोऽस्मि।

---

शेषः। सविश्रमः विश्रमेण विश्रान्त्या सहितो हि एव। पद्मावत्याः समीपे तस्य न्यासीकरणात्। तस्य रुमण्वतस्तु श्रमः। भारोद्वहनविषय इति शेषः। प्रसक्तो ऽविश्रान्तं चलित एव। वासवदत्तान्यासेन मया विश्रान्तिराप्ता तस्य त्वद्यापि सा नास्त्येवेति स्वेन साकं तं स्वीकृतकार्यविषये तोलयतीति सूक्ष्मया दृष्ट्याऽवगन्तव्यम्। तच्छ्रमाधिक्ये किं बीजमिति जिज्ञासायामाह—हि यस्मात्कारणात् यत्र यस्मिन्, नराधिपो राजा, आधीन आयत्तः। तस्मिन् रुमण्वति अमात्ये सर्वं राज्यप्रजापालनादिकं राज्ञा निर्वाह्यमखिलमेव कार्यजातं। अधीनं स्वायत्तम्। यतो राजा स्वाधीनस्तत्कार्यमप्यखिलं स्वाधीनमिति महान्खल्वस्य सश्रमो भार उद्वहनीय इति भावः। अथवा तस्मिन्नित्यादि सामान्यं वचनम्। एवं यत्र यस्मिन्कस्मिन्नप्यमात्य इत्यपि। शेषं स्पष्टम्। वृत्तमनुष्टुप्। लक्षितपूर्वमिदम्।

**अथ भो इति**—अथ भो इति प्रश्ने। पर्यवस्थापितः प्रकृतिमापादितः।

**तदिदानीमिति**—इह तया सह कथितमित्यादिः इह तया सह शयितमित्यन्तो दुःखाकुलस्य तस्य तत्तत्स्मृतिपूर्वको बहुविधो विलापो ज्ञेयः। हसितं, मयेति शेषः। एवमुत्तरत्र। पर्युषितम् निवासः कृत इति। महता यत्नेनेति वासवदत्तास्मृत्युत्पादकानि तानि तानि चिह्नानि तत्रासन्, एवं च तादृशीं स्मृतिमपि विहातुमनिच्छन् राजा बहिर्गन्तुं नैच्छदिति ध्वन्यते। तस्माद् ग्रामात् लावाणकात्। अमात्यैरपक्रान्तम्। राजानं गृहीत्वा ते बहिर्निरगच्छन्निति भावः। प्रोषितानि विलोपं गतानि नक्षत्राणि, तथाभूतश्चन्द्रश्च यस्मिन् तत्। नभ इव स ग्रामोऽरमणीयो निस्तेजस्कः संवृत्तः। अमात्या नक्षत्राणीव, उदयनो राजा चन्द्र इवेति बिम्बप्रतिबिम्बभावो ज्ञेयः। तथा च यथा नभोऽरमणीयं भवति तथा ग्रामोऽपि अरमणीयः इति प्रकान्तलिङ्गभङ्गोऽत्रेति सहृदयगम्यम्। तथाहि। ग्रामशब्दस्य पुंलिङ्गत्वादरमणीयनभस्यन्वयासंभवाल्लिङ्गव्यत्ययेनान्वयः, एवं च भग्नप्रक्रमत्वं नाम दोष इत्यवगन्तव्यम्।

**तत इति**—तस्मादेव कारणादिति।

---



१ अपक्रान्तमपश्यम्। २ अपक्रान्ते।

तापसी—सो खु गुणवन्तो णाम राआ, जो आअन्तुएण वि इमिणा एव्वं पसंसीअदि । [ स खलु गुणवान् नाम राजा, य आगन्तुकेनाप्यनेनैवं प्रशस्यते । ]

चेटी—भट्टिदारिए ! किं णु खु अवरा इत्थिआ तस्स हत्थं गमिस्सदि । [ भर्तृदारिके ! किं नु खल्वपरा स्त्री तस्य हस्तं गमिष्यति । ]

पद्मावती—( आत्मगतम् ) मम हिअएण एव्व सह मन्तिदं । [ मम हृदयेनैव सह मन्त्रितम् । ]

ब्रह्मचारी—आपृच्छामि भवन्तौ । गच्छामस्तावत्[1] ।

उभौ—गम्यतामर्थसिद्धये ।

ब्रह्मचारी—तथास्तु ।

---

सो खु इति—आगन्तुकेनापि शत्रुमित्राभ्यां परतरेणापीति भावः ।

भट्टिदारिए इति—किं नु खलु, अपि भवेदेतत् ( यद् ) अपरा स्त्री । द्वितीयोद्वाहार्थं सुनिश्चितेति भावः । तस्य हस्तं गमिष्यति, विवाहे तस्य पाणिग्रहणं करिष्यति । वासवदत्तायां तथाभूतं तस्य स्नेहं वीक्ष्यासंभव्येतदिति तस्या आशयः । तस्येति तादृग्गुणगणोपेतस्येति ध्वनिः । अपरा त्वत्तो भिन्ना । तथाभूतस्य तस्य त्वमेव योग्येत्यपि तदाशयो ज्ञेयः । या कापि भवतु तस्य पाणिग्रहणं कुर्वाणा सा धन्यैवेति भावः ।

ममेति—यत्खलु चेट्या उक्तं तन्मे हृदयेन साकं संमन्त्र्यैवेति । तस्या आशयो मद्हृदयचिन्तितात्तस्मान्नातिभिद्यत इति भावः । एवं चानेन उदयनगुणगणश्रवणेन सा काममपि मसृणामवस्थामनुभवतीति ज्ञायते । शाकुंतलेऽपि द्रष्टव्यं । "हृदय ! मा उत्ताम्य । एषा त्वया चिन्तितमनुसूया मन्त्रयते" इति ।

आपृच्छामीति—आपृच्छामि आमन्त्रये । यद्यप्यत्र "आङि नुप्रच्छयोः" इति वार्तिकेन प्राप्तस्तङ् नित्यस्तथापि स न कृतोऽत्रेति दृश्यते । एतच्चिन्त्यमेव । भवन्तौ इति काञ्चुकीयपरिव्राजिकावुद्दिश्येति ज्ञेयम् ।

गम्यतामिति—अर्थस्य श्रुतिगतविशेषज्ञानस्य सिद्धिः प्राप्तिस्तस्यै, तदर्थमिति यावत् । शोभनेच्छापूर्वकमाशीर्वचनमिदम् ।

तथास्त्विति—आशीर्वादस्वीकारः ।

---

१ साधयामः ।

( निष्क्रान्तः । )

**यौगन्धरायणः**—साधु, अहमपि तत्रभवत्याभ्यनुज्ञातो गन्तुमिच्छामि ।

**काञ्चुकीयः**—तत्रभवत्याभ्यनुज्ञातो गन्तुमिच्छति किल ।

**पद्मावती**—अय्यस्स भइणिआ अय्येण विना उक्कण्ठिस्सिदि । [ आर्यस्य भगिनिकाऽऽर्येण विनोत्कण्ठिष्यते । ]

**यौगन्धरायणः**—साधुजनहस्तगतैषा नोत्कण्ठिष्यति । ( काञ्चुकीयमवलोक्य । ) गच्छामस्तावत् ।

**काञ्चुकीयः**—गच्छतु भवान् पुनर्दर्शनाय ।

**यौगन्धरायणः**—बाढम्[1] ।

---

**साध्विति** । तत्रभवत्या पद्मावत्या । अभ्यनुज्ञातो दत्तानुमतिः ।

पद्मावत्यनुमत्या गन्तुकामेन यौगन्धरायणेन साक्षात्तामेवोद्दिश्य न पृष्टं आर्यव्यवहारविलोपप्रसंगादिति ज्ञात्वा काञ्चुकीयस्तस्य कृते पद्मावतीं प्रति वचनं प्रयुङ्क्ते **तत्रभवत्ये**त्यादिना ।

**अय्यस्सेति**—उत्कण्ठिष्यते, त्वया विनाऽत्र सैकाकिनी त्वत्कृते समुत्सुका भविष्यति । अहर्निशं त्वामेवानुध्यायन्ती तिष्ठेदिति भावः । अहमपि तद्विनोदनार्थं यावच्छक्यं प्रयतिष्य एव, भवानपि न तादृशकार्यान्तरव्यग्रः स्यात्तदा तिष्ठत्विति वाऽभिप्रायः ।

**साधुजनेति**—नोत्कण्ठिष्यतीति प्राग्वत् । अत्र कारणं तु साधुजनहस्तगतत्वं विज्ञेयम् । "किं शेषस्य भरव्यथा" इत्यादिसाधूक्तिदिशा अङ्गीकृतकार्यनिर्वाहे सज्जनानां दृढः प्रयत्नः । न तत्र लेशतोऽपि शङ्कोत्पद्यत इति मयाऽपि अस्या विषये न काऽपि चिन्ता कार्येति तदाशयः । अत्रोत्कण्ठिष्यतीति परस्मैपदं चिन्त्यम् । "सुखादिभ्यः कर्तृवेदनायाम्" ( पा० सू० ३।१।१८ ) इत्यादिना वेदनाकर्तुः सुखादीनि चेत्स्युस्तदा सुखादिभ्यः कर्मभ्यः क्यङ्प्रत्ययविधानात् ।

**गच्छत्विति**—पुनर्दर्शनाय, अचिरेणैव त्वां वयं यथा द्रक्ष्यामस्तथा विधेयमिति । शुभेच्छापुरःसरस्य गमनाभ्यनुज्ञादानस्य प्रकार एवायं नातोऽन्यथेति विज्ञेयम् ।

**बाढमिति**—बाढं निश्चयेनैवेत्यर्थः । तथा चामरः—"भृशप्रतिज्ञयोर्बाढम्" इति । तथास्त्विति तु पाठो न समीचीनः । पूर्वेण तु "यावच्छक्यमहं पुनर्दर्शने यतिष्य एव" इति भावेन तत्र स्वोन्मुखत्वप्रदर्शनं यथा भवति तथाऽपरेण "भवतु तथा ईश्वरकृपया वाऽन्येन वा हेतुना केनचित्" इत्यादिना नैवेत्यभिसन्धिः ।



---

[1] तथास्तु ।

( निष्क्रान्तः । )

काञ्चुकीयः—समय इदानीमभ्यन्तरं प्रवेष्टुम् ।

पद्मावती—अय्ये ! वन्दामि । [ आर्ये ! वन्दे । ]

तापसी—जादे ! तव सदिसं भत्तारं लभेहि । [ जाते ! तव सदृशं भर्तारं लभस्व । ]

वासवदत्ता—अय्ये ! वन्दामि दाव अहं । [ आर्ये ! वन्दे तावदहम् । ]

तापसी—तुवं वि अइरेण भत्तारं समासादेहि । [ त्वमप्यचिरेण भर्तारं समासादय । ]

वासवदत्ता—अणुग्गहीदह्मि । [ अनुगृहीतास्मि । ]

काञ्चुकीयः—तदागम्यताम् । इत इतो भवत्यः । संप्रति हि,—

खगा वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।

---

**समय इति**—अभ्यन्तरं, निवासहेतोः कल्पितस्योटजस्यान्त इति ।

**अय्ये इति**—उटजाभ्यन्तरं प्रवेष्टुमनाः पद्मावती गमनाभ्यनुज्ञायै तापसीमापृच्छते ।

**जादे इति**—अनूढायाः कन्यायाः सदृशमेवेदमाशीर्वचनम् ।

वासवदत्ताया अप्यामन्त्रणमाह—**अय्ये** इत्यादिना ।

**तुवमिति**—यौगन्धरायणस्य "प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या०" इत्यादिना वचनेन भर्तारमित्यस्य प्रोषितं दूरदेशं गतं पतिमित्यापद्यते । समासादय संगता भवेति यावत् ।

**अणुग्गहीदह्मीति**—अनेनाशीर्वादवचनेनोपकृतास्मीति ।

**तदिति**—सम्प्रति हीत्यस्य श्लोकेनान्वयः । खगाः विहगा वासोपेताः वासं निवासस्थानं, नीडमिति यावत्, उपेताः प्राप्ताः । मुनिजनः सलिलं अवगाढः विलोडनार्थं स्नानार्थमर्घ्यप्रदानार्थं चेति यावत् अवतीर्णः । प्रदीप्तः प्रज्वालितोऽग्निः । अग्निशरणस्थानेषु इति शेषः । भाति विशेषतः प्रकाशते । धूमः प्रदीप्ताग्निप्रत्युद्गतः मुनिवनमाश्रमभूविभागं प्रविचरति विशेषेण व्याप्नोति । दूरात् दूरप्रदेशात् आकाशमध्यविभागादिति भावः । परिभ्रष्टोऽधस्ताच्चक्रवालप्रदेशे पतितः ।

---

१ अय्ये ! गच्छामि । २ लभेहि ।

परिभ्रष्टो दूराद्रविरपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ[1] प्रविशति शनैरस्तशिखरम् ॥ १६ ॥

( निष्क्रान्ताः सर्वे । )

इति प्रथमोऽङ्कः ।

---

अपि च संक्षिप्तकिरणः संक्षिप्ताः संकुचिता किरणा येन सः । तादृशोऽसौ रविरपि रथं व्यावर्त्य परिवर्त्यास्तशिखरं अस्ताचलशृङ्गं शनैः शनैः प्रविशति । सूर्यास्तसमयः सम्प्राप्त इत्यर्थः । उत्तरार्धे समासोक्तिर्नामालङ्कारः, परिभ्रष्टस्य तथाभूतप्रवेशनवर्णनात् । तथाहि । यथा खलु कश्चिदुच्चस्थानात्पतितोऽवमानितोऽत एव निस्तेजस्कः संभूतो निभृतं शनैः शनैर्भूमिनिहितचक्षुर्गृहं निलीनार्थं प्रविशति तथैवासावपीति अप्रस्तुतव्यवहारप्रतीतिकृद्वर्णनप्रकारः । तल्लक्षणं च "समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्" इति । शिखरिणीवृत्तम् । लक्षितपूर्वमिदम् ।

**निष्क्रान्ता इति**—अङ्कसमाप्तौ सर्वेषामपि पात्राणां निर्गमनमावश्यकमिति कृत्वा तथोक्तम् । तथा च **साहित्यदर्पणे**—"अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः" इति । **दशरूपके**ऽपि च तथा—"तेषामन्तेऽस्य निर्गम" इति । तेषां पात्राणां, अस्याङ्कस्य इति ।

**प्रथमोऽङ्क** इति । अङ्कलक्षणं च **साहित्यदर्पणे**—

"प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
......................................
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
......................................
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
......................................
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥

अस्य विस्तरश्च तत एवावगन्तव्यः । अङ्कपदस्य च निर्वचनं नाट्यशास्त्रे—"अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः" इति ।

इति दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा विरचितायां स्वप्नवासवदत्तव्याख्यायां प्रथमोऽङ्कः ।

---

१ व्यावृत्य ।

# द्वितीयाङ्कस्य विषयः ।



कन्यकाभावानुरूपां कन्दुकक्रीडामनुभवन्त्याः पद्मावत्या वयःसन्धिदर्शनीयं मुखकमलं प्रेक्ष्य तद्रसपरा वासवदत्ता तामुज्जयिनीश्वरस्य प्रद्योतस्य तनयमुद्दिश्य भृशं परिहसति । तत्र च तद्विषये पद्मावत्या अनभिलाषश्चेटीमुखाज्ज्ञायते । ततश्च पुनः परीहासप्रसङ्गेऽनुसृतायाः पद्मावतीधात्र्या मुखात् कार्यवशाद्राजगृहं समागतायोदयनाय राज्ञे तद्वयोरूपादिकं ज्ञात्वा अनुरूपोऽयं मे भगिन्या इति कृत्वा पद्मावतीभ्रात्रा दर्शकेन वाचा दत्ता सेति रहस्योद्भेदः संजायते । ( अत्र च कारणं सर्वथैव रुमण्वदादयोऽमात्या यथामन्त्रितं कार्यं कुर्वाणा इत्यर्थादेव पूर्वानुसंधानाज्ज्ञेयम् । पद्मावत्याश्चोदयनाभिमुखं हृदयमासीदिति तु कथितपूर्वमेव । एवं च तत्संमत्यैव तद्भ्रात्रा दर्शकेनोदयनाय तथा प्रतिश्रुतमित्यप्याक्षेपलभ्यो विषयः । ) तदेतद्वृत्तमाकर्ण्य यथा यथा च पद्मावतीकौतुकमङ्गले सर्वेषां त्वराऽजायत तथा तथा स्त्रीस्वाभाव्यादन्धीभूतं वासवदत्ताया हृदयम् ।

# द्वितीयाङ्के स्थल-कालयोर्निर्णयः ।



**स्थलम्**—मगधदेशाधिपस्य दर्शकस्य राज्ञः प्रासादस्य नातिदूरवर्तिनि उपवनप्रदेशे माधवीलतामण्डपस्य पार्श्वभागः । यतश्च पद्मावती वासवदत्तया सह कन्दुकेन सविस्रम्भं क्रीडन्ती प्रदर्शिता ततस्तेन प्रमदवनेनैव भवितव्यमिति तर्क्यते । तत्र च क्रीडनाधिक्येन बहुलं परिश्रान्तां पद्मावतीमुद्दिश्य वासवदत्तया परीहासः प्रक्रम्यते । तत एव द्वितीयाङ्कस्य विषयः प्रारब्धः ।

**कालः**—प्रथमाङ्कोक्ताश्रमभूविभागात्पद्मावत्या निवर्तनात्प्रागेव उदयनस्य राज्ञो राजगृहे आगमनमासीदिति ज्ञायते । तस्या आगमनानन्तरमेव दर्शकेन सा तस्मै वाचा प्रदिष्टा । कन्दुकक्रीडनं वाचा प्रदानं च समकालीनमेवेत्यनुमीयते धात्र्याः प्रवेशे तद्वचनात् । अपि च अङ्कसमाप्त्यवसरे "अद्यैव शोभनं नक्षत्रं" "अद्यैव कौतुकमङ्गलं कर्तव्यं" इत्युक्तदिशा एकस्यैव दिनस्यावधिर्विज्ञेयो द्वितीयाङ्कस्य । तत्रापि कौतुकमङ्गलायावसरं दत्वा विचारिते कन्दुकक्रीडा सूर्योदयादूर्ध्वं संधिकाले वा व्यायामार्थं समारब्धाऽऽसीदिति निश्चितं प्रतिभाति । उदयनस्य चागमनवृत्तान्तेन ततः पूर्वः पूर्वौ वा दिवसौ अविज्ञातं संस्पृष्टौ । तौ गृहीत्वा कन्दुकक्रीडावसानं तावत्कालो विज्ञेयो विशेषतः ।

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति चेटी । )

**चेटी**—कुञ्जरिए ! कुञ्जरिए ! कहिं कहिं भट्टिदारिआ पदुमावदी[1] । किं भणासि, एसा भट्टिदारिआ माहवीलदामण्डवस्स पस्सदो[2] कन्दुएण कीळदि[3] त्ति[4] । जाव[5] भट्टिदारिअं उवसप्पामि । ( परिक्रम्यावलोक्य । ) अम्मो इअं भट्टिदारिआ उक्करिदकण्णचूळिएण वाआमसञ्जादसेदविन्दुविइत्तिदेण परिस्सन्तरमणीअदंसणेण मुहेण कन्दुएण कीळन्दी इदो एव्व आअच्छदि । जाव उवसप्पिस्सं[6] । [ कुञ्जरिके ! कुञ्जरिके ! कुत्र कुत्र भर्तृदारिका पद्मावती ? किं भणसि, एषा भर्तृदारिका माधवीलतामण्डपस्य पार्श्वतः कन्दुकेन क्रीडतीति । यावद् भर्तृदारिकामुपसर्पामि । अम्मो इयं भर्तृदारिका उत्क्षिप्तकर्णचूलिकेन व्यायामसञ्जातस्वेदविन्दुविचित्रितेन परिश्रान्तरमणीयदर्शनेन मुखेन कन्दुकेन क्रीडन्तीत एवागच्छति । यावदुपसर्प्स्यामि । ]

---

## अथ द्वितीयोऽङ्कः ।

अथ पद्मावत्या उदयनाभिमुखं हृदयमजायतेति तु प्रथमाङ्के सूचितमेव । तथाविधस्य तस्या अभिलाषस्य परिपोषार्थं स्वातन्त्र्येण तस्यास्तत्सखीभिर्वा तत्सदृशाभिरन्याभिर्वा संगतायाः प्रवेश इष्ट एव । परस्परविस्रब्धेषु सवयस्केष्वेव जनेषु तादृशस्य वस्तुनः परिपोषो भवतीति तादृशं तस्याः प्रवेशं सूचयितुं द्वितीयाङ्कमारभमाणः प्रवेशकं विरचयिषुस्तदनुरूपं चेटीस्वरूपं पात्रमवतारयन्नाह—**ततः प्रविशती**त्यादि ।

**कुञ्जरिए इति**—कुञ्जरिकेति पद्मावत्याश्चेट्या नाम । अनुक्तेऽपि वचसि श्रवणाभिनयं नाटयन्ती आह—किं भणसीति । इयमाकाशभाषिताख्या नाट्योक्तिर्ज्ञेया । तथा च **साहित्यदर्पणे**—"किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते । श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥" इति । एवं श्रुतमिवाभिनयन्ती सा चेटी तद्भाषणानुवादेऽप्यभिनयपरा भवति "एषा" इत्यादिना । माधवी मधौ वसन्ते पुष्प्यत्यसौ, वासन्तीत्यपरपर्याया लता । "अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता" इत्यमरः । तत्प्रचुरमण्डपस्य पार्श्वतोऽन्तिके । अम्मो इति—माधवीलतामण्डपसमीपस्थेति श्रुत्वा तत्र गन्तुकामायास्तस्यास्तमेव प्रदेशमुद्दिश्यागच्छन्तीं

---

१ °दारिआ पदुमावदी ( ०० पद्मावती ) । २ पस्सगदा (पार्श्वगता) । ३ कीळन्दी । ४ °त्ति । गच्छ तुवं । ५ अहं वि । ६ उवसप्पामि ।

( निष्क्रान्ता । )

प्रवेशकः ।

पद्मावतीं दृष्ट्वाऽऽश्चर्योद्गारः । उत्क्षिप्तकर्णचूलिकेन, उत्क्षिप्ता ऊर्ध्वदेशं प्रापिता कर्णचूलिका कर्णमूल आलम्बमानः कन्याभावसमुचित आभरणविशेषो यस्मिन् तेन । व्यायामेन कन्दुककेलिरसपरत्वेनेतस्ततः पलायनसमुद्भूतेन परिश्रमेण सञ्जाता ये स्वेदविन्दवस्तैः विचित्रितेन माधुर्याधिक्यं लम्भितेन । परिश्रान्तमत एव रमणीयं दर्शनं यस्य तत्तेन । मुखे परिश्रान्तत्वमुपचारो "विनिद्रं शयन"मित्यत्रवत् । रमणीयत्वं च प्रयासाधिक्याद्रक्तिमापादनेन कपोलयोरिति ज्ञेयम् । मुखेन उपलक्षितेत्यध्याहार्यम् । एवं पद्मावतीं कन्दुकक्रीडापरत्वेन चित्रितामवलोक्य न खलु न स्मारयत्यात्मानमन्या काचित्कन्यका अन्येन कविना वर्णिता । तथाहि—

"व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि
प्रेङ्खत्कुण्डलशोभिगण्डयुगलं प्रस्वेदिवक्त्राम्बुजं ।
शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया
यस्मात् कन्दुक ! सादरं सुभगया संसेव्यसे तत्कृती ॥ इति ।

**प्रवेशक इति**—नीरसमनुचितं वा वस्तु प्रवेशकादौ संसूच्यते । उदात्तं रसभावसमुज्ज्वलं च संदृश्यं भवति । तद्यथा—

"द्विधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
सूच्यमेव भवेत्किञ्चिद् दृश्यश्रव्यमथापरम् ॥" ( द० रू० )
"नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ।
दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ॥" ( द० रू० )

तत्र सूच्यं वस्तु कथं प्रतिपाद्यत इत्यत आह—

"अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भकचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥" इति ( द० रू० )

एवं पञ्चभिः सन्दर्भैरभिनेयानां पात्राणां प्रवेशं सूचयेदिति प्रतिपाद्य प्रवेशकस्य लक्षणमाह—

"तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ।
प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः ॥" इति ( द० रू० )

तद्वदित्यनेन भूतभविष्यदर्थप्रज्ञापनपूर्वकत्वमायातीति भावः । अङ्कद्वयस्यान्त इति प्रथमाङ्केऽस्य प्रतिषेध इति धनिको दशरूपकटीकायां, साहित्यदर्पणकारिकाविवरणे विश्वनाथोऽपि ।

एवं च संक्षेपतो भूतभविष्यदर्थप्रतिपादनार्थं रचितः, नीचेन नीचैर्वा पात्रैः प्रयोजितः अङ्कद्वयमध्ये समावेशितः सन्दर्भः प्रवेशक इति तस्य सामान्यं स्वरूपं विज्ञेयम् ।

( ततः प्रविशति कन्दुकेन क्रीडन्ती पद्मावती सपरिवारा वासवदत्तया सह । )

**वासवदत्ता**—हळा ! एसो दे कन्दुओ । [ हला ! एष ते कन्दुकः । ]

**पद्मावती**—अय्ये ! भोदु दाणिं एत्तअं । [ आर्ये ! भवत्विदानीमेतावत् । ]

**वासवदत्ता**—हळा ! अदिचिरं कन्दुएण कीळिअ अहिअसञ्जादराआ परकेरआ विअ दे हत्था संवुत्ता । [ हला ! अतिचिरं कन्दुकेन क्रीडित्वाधिकसञ्जातरागौ परकीयाविव ते हस्तौ संवृत्तौ । ]

**चेटी**—कीळदु कीळदु दाव भट्टिदारिआ । णिव्वत्तीअदु दाव अअं कण्णाभावरमणीओ काळो । [ क्रीडतु क्रीडतु तावद्भर्तृदारिका । निर्वर्त्यतां तावदयं कन्याभावरमणीयः कालः । ]

---

चेटीसूचितस्वरूपायाः पद्मावत्याः प्रवेशमाह—**ततः प्रविशती**त्यादिना ।

**हळेति**—हलेति सखीं प्रत्याह्वानेऽव्ययम् । तथा चामरः—"हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति" इति । क्रीडन्त्यास्तस्या हस्तात्सुदूरं परिभ्रष्टं कन्दुकं स्वेन हस्तेनादाय तस्यै प्रत्यर्पयन्त्याह—हळेत्यादि ।

**अय्ये इति**—चिरात्कन्दुकक्रीडनेन परिश्रान्ता सेति ज्ञायतेऽनेन । एतावत् भवतु, अस्तु । अतःपरं क्रीडनेनालमिति भावः ।

अतिपरिश्रान्तां क्रीडने च विरताभिलाषां तां ज्ञात्वा तत्रानुमोदमानाऽऽह वासवदत्ता—**हळेति**—अधिकः सञ्जातः कन्दुकापक्षेपणोत्क्षेपणताडनादिना वृद्धिं प्रापितः रागः सहजो रक्तिमा ययोस्तौ । स्वभावत एव रक्तिमोपेतौ हस्तौ समधिककन्दुकक्रीडया रक्तिमाधिक्यं प्रापिताविति भावः । युवत्या हस्ततलवर्णनं द्रष्टव्यमिदम् । "तस्या गृहोद्यानसरोगतस्य हस्तस्थ एवाम्बुरुहस्य रागः" इति । ते हस्तौ परकीयौ इव अन्यदीयाविति यावत् । अतथाभूते ते हस्तकमले प्रेक्ष्य तवैवेति शङ्कोत्पद्यत इति भावः । अथवा परकीयाविति परस्वाधीनौ । परकीयं हि वस्तु यथेच्छं यत्र कुत्रचिन्न यथा व्यवह्रियते तस्य परतन्त्रत्वात्तथैव यस्मात्ते हस्तौ ( श्रमाधिक्यात् ) पूर्ववन्न प्रसरतस्तस्मान्मन्ये परतन्त्रौ ताविति वासवदत्ताशयः । "किंनिमित्तं वारयसि" इति पाठोऽत्र दृश्यते स न समीचीनः । "क्रीडतु क्रीडतु" इति चेट्या वचनस्य पूर्वत एव स शोभते ।

**कीळदु इति**—भर्तृदारिकेति नाम्ने परिचरादिभिः राजदुहितरमुद्दिश्य क्रियमाणो व्यपदेशः । तथाच **साहित्यदर्पणे**—"वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृ-

---

१ आवन्तिकावेषधारिणी वासवदत्ता च । २ हळा ! किंणिमित्तं वारेसि । ( किंनिमित्तं वारयसि । )

**पद्मावती**—अय्ये ! किं दाणिं मं ओहसिदुं विअ णिज्झाअसि ? [ आर्ये ! किमिदानीं मामपहसितुमिव निध्यायसि ? ]

**वासवदत्ता**—णहि णहि। हळा ! अधिअं अज्ज सोहसि। अभिदो विअ दे अज्ज वरमुहं पेक्खामि। [ नहि, नहि। हला ! अधिकमद्य शोभसे। अभित इव तेऽद्य वरमुखं पश्यामि। ]

**पद्मावती**—अवेहि। मा दाणिं मं ओहस। [ अपेहि। मेदानीं मामपहस। ]

---

दारिका" इति। क्रीडतु क्रीडतु इति वीप्सया यथेष्टं क्रीडतु, अलं प्रतिषिध्यैतादृशै-रुत्साहभङ्गकारिभिर्वाक्यैरिति ध्वन्यते। निर्वर्त्यतां परिसमाप्तिं नीयतां तावदयं, कन्याया भावस्तेन रमणीयः कालः। आविवाहकालमियमेतादृशैरेव क्रीडनैरानन्दं समनुभवतु, विवाहोत्तरं पारतन्त्र्यमन्नेयं नेममानन्दं समनुभविष्यति। श्वशुरगृह-स्थायास्तस्याः पुनः शकुन्तलामुद्दिश्य "शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने" इत्यादिकण्वकृतोपदेशमनुरुध्यैतादृग्रसभरसंभिन्नं क्रीडनं सुदूरमेवेति तदाशयः।

**अय्ये इति**—उक्तप्रकारं परां कमनीयतामापन्नं स्वमुखं साभिप्रायं सुचिरं निर्वर्णयन्तीं वासवदत्तां वीक्ष्य तदभिप्रायं ज्ञातुकामायाः पद्मावत्या उक्तिः। माम-पहसितुमिव मदालम्बनं कमपि परीहासं प्रवर्तयितुमिव निध्यायसि निर्वर्णयसि।

**णहीति**—नहि नहि, परिहसितुं नैव निध्यायामीति भावः। तत्र कारणमाह—अधिकमिति। सविशेषमद्य ते दर्शनं, अत एव मे चक्षुस्तत्र लग्नमिति। "सोहदि" इति पाठात् "सोहसि" इति पाठः श्रेयान्, लाघवात्। "सोहदि" ( शोभते ) इति पाठे "भवती, त्वन्मुखं, त्वदाकृतिः" इति किमप्यध्याहार्यं भवेत्।

**अभित इति**—ते तव वरमुखं वरस्य विवाहार्थं सुनिश्चितस्य तरुणस्य मुखं अभितः परित इव, त्वामिति शेषः। पश्यामि। अद्य ते सौन्दर्याधिक्यात्त्वदर्थं निश्चितो वरोऽत्रागत्य त्वां सविशेषं प्रत्यवयवविनिहितदृष्टिर्निर्वर्णयतीति मे भाति। यत्र यत्रावयवेऽहं दृष्टिं निक्षिपामि तत्र तत्र तदभिमुखं तन्मुखं मया दृश्यत एवेति तदाशयः। अनेन न खलु तन्मुखमेव किन्तु सर्वाप्याकृतिः सविशेषरमणीया नयनयोः समधिकां प्रीतिं समुत्पादयन्त्यासीदिति ध्वन्यते। ते इत्यस्य वरमुख-मित्यत्रान्वयात् "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" इति वार्तिकेन अभितःशब्दप्रयोगादध्याहृतस्य त्वामिति द्वितीयान्तपदस्योपस्थापनान्न कोऽपि दोष इत्यवगन्तव्यम्।

**अवेहीति**—कृत्रिमकोपसमुद्भाव्यमानेतादृशी सर्वकन्यासाधारणोक्तिः। मा अपहस, अपहस्यालमिति। "मा स्म मालं च वारणे" इत्यमरः।

---

१ सोहदि ( शोभते )।

**वासवदत्ता**—एसह्मि तुह्णीआ भविस्सम्महासेणवधु ! । [ एषास्मि तूष्णीका भविष्यन्महासेनवधु ! । ]

**पद्मावती**—को एसो महासेणो णाम ? [ क एष महासेनो नाम ? ]

**वासवदत्ता**—अत्थि उज्जइणीओ राआ पज्जोदो णाम । तस्स बळपरिमाणणिव्वुत्तं णामहेअं महासेणो त्ति । [ अस्त्युज्जयिनीयो राजा प्रद्योतो नाम तस्य बलपरिमाणनिर्वृत्तं नामधेयं महासेन इति । ]

**चेटी**—भट्टिदारिआ तेण रञ्ञा सह सम्बन्धं णेच्छदि । [ भर्तृदारिका तेन राज्ञा सह सम्बन्धं नेच्छति । ]

**वासवदत्ता**—अह केण खु दाणिं अभिळसदि ? [ अथ केन खल्विदानीमभिलषति ? ]

---

**एसह्मि इति**—भविष्यन्महासेनवधु ! महासेनस्य तदपरनामधेयस्य प्रद्योतस्य राज्ञो वधूः स्नुषा, भविष्यन्ती च महासेनवधूस्तत्सम्बुद्धौ । "समाः स्नुषाजनीवध्वः" इत्यमरः । "वधूः पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि । नवपरिणीतायां च" इति हैमोऽपि । कुत्रचिद्ग्रन्थेषु "वधूः" इति पाठान्तरं दृश्यते तत् प्रामादिकमेव, नदीकार्यत्वेन ह्रस्वस्यैवोक्तत्वात् । एषास्मि तूष्णीका मौनशीला । "तूष्णींशीलश्च तूष्णीकः" इत्यमरः । नातःपरं त्वामपहंसामीति भावः । एवमुक्त्वापि महासेनेत्या-दिपरीहासः प्रणयपरिवशत्वेन तस्या अतितरां शोभत एव । प्रद्योततनयविषये तदभिप्रायं ज्ञातुकामायास्तस्यास्तथा सम्बोधनम् ।

**को एसो इति**—महासेनाभिधानस्याश्रुतत्वात्तस्याः तत्र वासवदत्तां प्रति पृच्छावचनम् । अथवा श्रुतमप्यश्रुतमिव दर्शयति । स्वदारकस्य कारणाद्दूत-संपातादिके कर्मणि प्रवृत्तस्य प्रद्योतस्य महासेन इति नामधेयं न तया सर्वथैवा-श्रुतमिति न भवेत् किन्तु तत्रानभिलाषित्वात्तत्र तन्मनसि पदमकरोदिति ध्वन्यते ।

**अत्थि इति**—उज्जयिनीयः, उज्जयिन्या अयमिति । उज्जयिन्या इति संस्कृ-तस्य "उज्जइणीए" इति प्राकृते भवेत् न तु "उज्जइणीओ" इति । बलस्य सेनायाः परिमाणेन परिसंख्यया निर्वृत्तं सम्पन्नं तस्य नामधेयं महासेन इति । एतच्च महती सेना यस्य स इति यथार्थतामापन्नं तस्येदमपरं नामेति भावः ।

**भट्टिदारिआ इति**—सम्बन्धश्च स्नुषास्वरूपेण ।

**अह केण इति**—केन खलु । राज्ञा सम्बन्धमिति शेषः । सम्बन्धश्च स्नुषा-रूपेण भार्यारूपेण वा । अभिलषति काङ्क्षते । यथा खलु पद्मावत्यास्तद्विषये ...

चेटी—अत्थि वच्छराओ उअअणो णाम । तस्स गुणाणि भट्टिदारिआ अभिळसदि । [ अस्ति वत्सराज उदयनो नाम । तस्य गुणान् भर्तृदारिकाभिलषति । ]

वासवदत्ता—( आत्मगतम् ) अय्यउत्तं भत्तारं अभिळसदि ! ( प्रकाशम् ) केण कारणेण ? [ आर्यपुत्रं भर्तारमभिलषति ! केन कारणेन ? ]

चेटी—साणुक्कोसो त्ति । [ सानुक्रोश इति । ]

वासवदत्ता—( आत्मगतम् ) जाणामि जाणामि । अअं वि जणो एव्वं उम्मादिदो ! [ जानामि, जानामि । अयमपि जन एवमुन्मादितः ! ]

---

स्त्वया ज्ञातस्तथैव तद्विस्रम्भकथाद्वितीयया त्वयान्यदपि किञ्चित्तद्हृदयगतं ज्ञातं चेत्तदुच्यतामिति तदाशयः ।

**अत्थि इति**—तस्य गुणानभिलषति, तद्गुणगणाकृष्टा तं वरत्वेनेच्छति । अनया वचनभङ्ग्या नानया स द्वितीयविवाहार्थं सज्जीभवन्नपि तथाभूतत्वेन मनसि पदं कारित इति स्वभर्तृदारिकाया न किमपि परिहीनमिति ध्वनिः ।

**अय्यउत्तमिति**—आर्यपुत्रं मत्स्वामिनं भर्तारमभिलषति स्वभर्तृत्वेनेच्छति । "केन कारणेन" इति तु स्वभर्तारमेव स्वभर्तृत्वेन कामयमानां पद्मावतीं वीक्ष्य स्त्रीस्वभावविमूढायास्तस्या विसङ्गतः प्रश्नः । यतः "गुणानभिलषति" इति कथितपूर्वमेव कारणं चेट्या । एवं च "के ते गुणा यैरेवमाकृष्टा मे सखी" इति प्रष्टुमुचितत्वात् ।

**साणुक्कोसो इति**—अनुक्रोशयाऽनुकम्पया सहितः । इति, इत्येव हेतुना । तदेव सुमहत्कारणं येन खल्वाकृष्टा भर्तृदारिकेति भावः । स्वप्रियस्य स्वस्मिन्नेव गाढः स्नेह इष्यते प्रायः सर्वाभिरपि युवतिभिः । स एव तत्स्थो महत्तरो गुणो येन च अनादृतान्याखिलवस्तुविचारेण ता आकृष्यन्त इति सर्वयुवतिसाधारणः प्रवाहः । तदेव द्रष्टव्यम्—

"अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किं त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥" इति ।

**जाणामि इति**—जानामि जानामि, तस्य सानुक्रोशत्वमिति शेषः । वीप्सावचनं तद्दार्ढ्यप्रतिपादनार्थम् । अयमपि जनः पद्मावत्यपि । न खल्वहमेवेति भावः । उन्मादितः उन्मादं प्रापितः, सर्वथैव तदेकप्रवणमानसः कृत इति

**चेटी**—भट्टिदारिए ! जदि सो राआ विरूओ भवे ? [ भर्तृदारिके ! यदि स राजा विरूपो भवेत् ? ]

**वासवदत्ता**—णहि णहि । दंसणीओ एव्व । [ नहि नहि दर्शनीय एव । ]

**पद्मावती**—अय्ये ! कहं तुवं जाणासि ? [ आर्ये ! कथं त्वं जानासि ? ]

**वासवदत्ता**—( आत्मगतम् ) अय्यउत्तपक्खवादेण अदिक्कन्दो समुदाआरो । किं दाणिं करिस्सं ? होदु दिट्ठं । ( प्रकाशम् ) हळा ! एव्वं उज्जइणीओ जणो मन्तेदि । [ आर्यपुत्रपक्षपातेन अतिक्रान्तः समुदाचारः । किमिदानीं करिष्यामि ? । भवतु, दृष्टम् । हला ! एवमुज्जयिनीयो जनो मन्त्रयते । ]

---

यावत् । मम खलु तस्मिन्नात्मीयतया तदनुक्रोश आदरः स्यात्, किन्त्वपरिचितायां अस्यास्तं दृष्ट्वा निकषं प्राप्तोऽसावित्यहो मे भर्तुः सानुक्रोशत्वमिति तदाशयः ।

**भट्टिदारिए इति**—स राजा उदयनो यदि विरूपः सौन्दर्यहीनो भवेत् । तदैष ते निश्चयो यथापूर्वमेव बद्धमूलः स्याद्वेति शेषः । अथवा, किं वा करिष्यसीत्यपि । तद्गुणेषु बद्धादरा त्वं "कन्या वरयते रूप"मिति न्यायं सर्वथैवानादृत्य तं पतित्वेन स्वीकरोषि वेति सुमहान् प्रश्न इत्यूहनीयम् ।

**णहि इति**—नहि नहि, स विरूप इति शेषः । द्विरुक्तिर्दार्ढ्यार्थाय । ( प्रत्युत ) दर्शनीयोऽभिलषणीयसौन्दर्य एव ।

**अय्ये इति**—कथं त्वं जानासि, स प्रकार उच्यतामिति भावः । किं स त्वया साक्षाद् दृष्टः, उत केनाप्यनेन तथा कथितः, अथवा अन्येन केनापि प्रकारेण त्वया तथाभूतोऽसौ ज्ञात इति कथ्यतामिति तदाशयः ।

**अय्यउत्त-इति**—आर्यपुत्रे पक्षपातः स्नेहभावस्तेन, अतिक्रान्त उल्लङ्घितः समुदाचारो व्यवहारः । "अनिर्वर्णनीयं परकलत्रं" इति यथा पुरुषपालनीयः समुदाचारस्तथैव "अनिर्वर्णनीयः परपुरुषः" इति स्त्रिया परिपालनीयः स इति । स व्यवहारो न मया मनसि कृतः इति भावः । अथवा समुदाचारस्तत्कालोचितो व्यवहारः, वेषान्तरसमनुरूपः स इति । एवं प्रकारेण निश्चितार्थप्रतिपादनेन कदाचिद्रहस्यसंभेदः स्यादिति न मया विचार्य व्यवहृतमित्यभिसंधिः । उक्तेऽर्थे उपायं चिन्तयति—किमित्यादिना । भवतु दृष्टं, दृष्ट उपाय इति यावत् । अनेन तस्याः प्रत्युत्पन्नमतित्वं ज्ञायते । येन खलु रहस्योद्घाटनं न भवेत्तमेवार्थमाह—हला इति । एवं, यत्खलु मयोक्तं स दर्शनीय इति । उज्जयिनीय उज्जयिन्यां भवो जनो लोको मन्त्रयते परस्परं कथयति । तत्कथनादेव मया तथोक्तमिति भावः ।

पद्मावती—जुज्जइ। ण खु एसो उज्जइणीदुल्लहो। सव्वजणमणोभिरामं खु सोभग्गं णाम। [ युज्यते। न खलु एष उज्जयिनीदुर्लभः। सर्वजनमनोभिरामं खलु सौभाग्यं नाम। ]

( ततः प्रविशति धात्री। )

धात्री—जेदु[१] भट्टिदारिआ। भट्टिदारिए! दिण्णासि। [ जयतु भर्तृदारिका। भर्तृदारिके! दत्तासि। ]

वासवदत्ता—अय्ये! कस्स? [ आर्ये! कस्मै? ]

धात्री—वच्छराअस्स उदअणस्स[२]। [ वत्सराजायोदयनाय। ]

---

जुज्जइ इति—युज्यत उपपद्यते। तत्र कारणमाह—न खल्विति। न खलु एष उज्जयिन्याः दुर्लभः लब्धुमशक्यः। उज्जयिनीशब्दोऽत्र स्वार्थेऽसंभवन् लक्षणया स्वसंबन्धिनः पुरुषादीन् प्रत्याययति। एवं च उज्जयिनीजनानामित्यापद्यते। स्वस्य राज्ञः प्रद्योतमहाराजस्य जामातेति कृत्वा स तत्रस्थैर्जनैर्नैकवारं दृष्टः स्यात्। श्वशुरगृहे स चासकृदागतो भवेदिति तस्य दर्शनस्यादुर्लभत्वमुक्तम्। सौभाग्यं सौन्दर्यं, सर्वेषां जनानां मनसः अभिराममाल्हाददायकं नाम। अलौकिकं सौन्दर्यं सर्वेषामपि मनांस्याकर्षतीति भावः। एवं अलौकिकसुन्दरस्य तस्य लोकैर्बहुशो दृष्टत्वात्त्वदुक्तं सर्वमुपपद्यत इति प्रघट्टाशयः। एवं च प्रवृद्धासु विस्रम्भकथासु पद्मावतीगता उदयनविषयिणी रतिस्तत्सौन्दर्यसानुक्रोशत्वादिगुणप्रचयपरिसंख्यानेन सूक्ष्मया पद्धत्या वृद्धिं प्रापिता। अथ चानन्तरं तद्हृदयानुगुणं प्रसङ्गानुरोधेन च वक्तव्यतया संभाव्यमानं वस्तु समारब्धव्यमेवेति कृत्वा तत्रोचितं धात्र्याः प्रवेशमाह—**तत** इत्यादिना। धात्री उपमाता। "धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि" इत्यमरः।

**जेदु इति**—जयतु सर्वोत्कर्षेण वर्धताम्। दत्तासि, विवाहार्थं वाचा दानं तेऽद्य सुसंपन्नमिति भावः। तदेतद्वधूसम्बन्धिभिर्वरसम्बन्धिभिश्चैकत्र संमील्य विवाहसमयात्प्रागेव क्रियमाणं वर्तते, तत्र च शीलसम्पन्नानां कुलानां सुमहानादरः। विवाहसमारम्भादिकं तु तत्तद्देशाचारविचारपद्धतिमनुसृत्य भवति, तत्र च दानं साक्षात्क्रियमाणं दृश्यते तत्तु पूर्वोक्ताद्गौणमेव मन्यते तैरित्यनुसंधेयम्। अनेन दर्शकस्य तद्भ्रातुस्तत्र विषये प्रवृत्तिः पद्मावतीसम्मतेत्यपि ज्ञायते।

**अय्ये इति**—कस्मै वराय। दत्ता वाचा, प्रतिश्रुता वेति शेषः। यदर्थं पितुर्दूतसंपातादिपुरःसरः सुमहान्प्रयत्न आसीत्तस्मै मे भ्रात्रे (गोपालकनाम्ने प्रायः) अथवा यं खलु पद्मावती तद्गुणपरवशा भर्तृत्वेनेच्छति तस्मै मे स्वामिन उदयनायेति प्रश्नस्याशयो विज्ञेयः।

**वच्छराअस्स इति**—उदयनाय, यं खलु भर्तृदारिकाभिलषतीति, अत एव संपन्नमनोरथा खल्वस्माकं भर्तृदारिकेति तदाशयः।

---

१ जेदु जेदु। २ °णस्स दिण्णा (दत्ता)।

**वासवदत्ता**—अह कुसळी सो राआ ? [ अथ कुशली स राजा ? ]

**धात्री**—कुसळी सो[1] इह आअदो। तस्स भट्टिदारिआ पडिच्छिदा अ। [ कुशली स इहागतः। तस्य भर्तृदारिका प्रतीष्टा च। ]

**वासवदत्ता**—अच्चाहिदं[2] ! [ अत्याहितम् ! ]

**धात्री**—किं एत्थ अच्चाहिदं ? [ किमत्रात्याहितम् ? ]

**वासवदत्ता**—ण हु किञ्चि। तह णाम सन्तप्पिअ उदासीणो होदि त्ति। [ न खलु किञ्चित्। तथा नाम संतप्योदासीनो भवतीति। ]

**धात्री**—अय्ये ! आअमप्पहाणाणि सुळहपय्यवत्थाणाणि महापुरुसहिअआणि होन्ति[3]। [ आर्ये ! आगमप्रधानानि सुलभपर्यवस्थानानि महापुरुषहृदयानि भवन्ति। ]

---

ब्रह्मचारिणो मुखाच्छ्रुतोदयनवृत्तान्ता तत्स्नेहाधिक्यात्कुशलं तस्य ज्ञातुमिच्छन्ती सा तथैवासीत्। किन्तु प्रसङ्गं तथाप्राप्तमवलोक्यात्मानमप्रभूय सहसा पृच्छति—

**अहेति**। कुशलिन एव तस्यात्रागत्य पद्मावतीस्वीकारः संभवत्यतो मदर्थं जीवितं त्यक्तुकामस्य तस्य कथंभूतेयं व्यवहृतिरित्याशङ्का तस्या व्यज्यते।

**कुसळी इति**—तस्य, तेनेत्यर्थः। राज्ञां मतः, बुद्धः, पूजितो वेतिवत्। "क्तस्य च वर्तमाने" ( पा० सू० २।३।६७ )। प्रतीष्टा स्वीकृता।

**अच्चाहिदं इति**—अत्याहितं, अविचार्य कृतमेतत् कर्म, अयुक्तमेतदिति वा। अन्यस्त्रीस्वीकारस्वरूपमिति भावः।

**किं एत्थ इति**—गुणवान्खलु स राजा, पद्मावती च तस्य योग्या। एवं योग्ये योग्येन युज्यमाने किमत्राविचार्य कृतमिति प्रश्नस्य भावः।

रभसात्तथा प्रसज्ञाननुचितमुक्त्वाप्यविकृतभावामिवात्मानं दर्शयन्त्याह—**न खल्विति**। तथा ब्रह्मचार्युक्तप्रकारेण। संतप्य वासवदत्ताविषयकेण शोकेन विवशीभूयापि। उदासीनो भवति, वासवदत्तां सर्वथैव विस्मृत्यान्यस्त्रीपाणिग्रहणे समुत्सुको भवति। एवं मनसि कृत्वा मया तथोक्तमित्यतो न किञ्चिदत्याहितमिति।

**अय्ये इति**—आगमः शास्त्रं परम्परागतसदुपदेशो वा प्रधानो येषां तानि, शास्त्रोपदेशादिना विहितसंस्काराणीति यावत्। तथाप्रयुक्तः सदुपदेशः कादम्बर्याम्—"सखे ! पुण्डरीक ! नैतदनुरूपं भवतः। धैर्यधना हि साधवः। किं यः

---

१ सो आअदो। २ °हिदं खु एदं ( खल्वेतत् । ) ३ होन्ति सोअसुण्णाणि ( शोकशून्यानि )।

**वासवदत्ता**—अय्ये! सअं एव्व तेन वरिदा? [आर्ये! स्वयमेव तेन वरिता?]

**धात्री**—णहि णहि। अण्णप्पओअणेण इह आअदस्स अभिजणविञ्ञाणवओरूवं पेक्खिअ सअं एव्व महाराएण दिण्णा। [नहि नहि। अन्यप्रयोजनेनेहागतस्याभिजनविज्ञानवयोरूपं प्रेक्ष्य स्वयमेव महाराजेन दत्ता।]

**वासवदत्ता**—(आत्मगतम्) एव्वं! अणवरद्धो दाणिं एत्थ अय्यउत्तो। [एवम्! अनपराद्ध इदानीमत्रार्यपुत्रः।]

---

कश्चित्प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि। क्व ते धैर्यम्" इत्यादि। (अत एव) सुलभं सौकर्येण लब्धुं योग्यं, पर्यवस्थानं प्रकृतौ स्थापनं, येषां तानि। तथाभूतानि महापुरुषाणां हृदयानि भवन्ति। महापुरुषाणां विकृतमपि चित्तं तेषां शास्त्राभ्यासादिकेनाचिरादेव पर्यवस्थाप्यत इति भावः।

यद्यपि पर्यवस्थापितं कथमपि तेन स्वचेत इति गृहीतेऽपि स्वस्मिन्स्नेहाधिक्यात् स्वयमागत्य पद्मावतीवरणमशक्यमेवेति मन्वाना पृच्छति—**अय्ये** इति। स्वयमेवेति। स्वयमेव वरिता, भविष्यद्भार्यात्वेनाङ्गीकृतान्येन वा केनचित्तथा प्रेरितेन तेनेति।

**णहि इति**—अन्यप्रयोजनेन कार्यान्तरहेतुना। प्रयोजनं चात्र मगधदेशाधिपस्य स्वशत्रोररुणेरुन्मूलने साहाय्ययाचनमित्यनुसंधेयम्। अभिजनश्च विज्ञानं च वयश्च रूपं चैतेषां समाहारः। अभिजनः कुलं, विज्ञानं शिल्पादिशास्त्रपारदृश्वत्वम्। "अभिजनः कुले ख्यातो जन्मभूम्यां कुलध्वजे" इति विश्वः। स्वयमेव, न तु तत्प्रार्थितेन। महाराजेन दर्शकेन दत्ता। द्रष्टव्योऽयं सन्दर्भः कथासरित्सागरे लावाणकनाम्नि तृतीये लम्बके—"नान्यथा (वासवदत्तासत्त्वे) तां सुतां (पद्मावतीं) राज्ञे ददाति मगधाधिपः। एतदर्थं स हि मया (यौगन्धरायणेन) प्रार्थितः पूर्वमुक्तवान्॥ १४॥

नाहं वत्सेश्वरायैतां दास्याम्यात्माधिकां सुतां।
तस्य वासवदत्तायां स्नेहो हि सुमहानिति॥ १५॥
सत्यां देव्यां च वत्सेशो नैवान्यां परिणेष्यति।
देवी दग्धेति जातायां ख्यातौ सर्वं तु सेत्स्यति॥ १६॥
पद्मावत्यां च लब्धायां सम्बन्धी मगधाधिपः।
पश्चात्कोपं न कुरुते सहायत्वं च गच्छति॥ १७॥ इति।

**एव्वमिति**—एवं, अन्येन प्रेरितस्तथाऽकरोन्न तु स्वयम्। (तेन च) अनपराद्धः नास्ति अपराद्धमपराधो यस्य सः। तथाभूत आर्यपुत्रो मत्स्वामी।

( प्रविश्यापरा )

**चेटी**—तुवरदु तुवरदु दाव अय्या । अज्ज एव्व किल सोभणं णक्खत्तं । अज्ज एव कोदुअमङ्गळं कादव्वं त्ति अह्माणं भट्टिणी भणादि । [ त्वरतां त्वरतां तावदार्या । अद्यैव किल शोभनं नक्षत्रम् । अद्यैव कौतुकमङ्गलं कर्तव्यमित्यस्माकं भट्टिनी भणति । ]

**वासवदत्ता**—( आत्मगतम् ) जह जह तुवरदि, तह तह अन्धीकरेदि[2] मे हिअअं । [ यथा यथा त्वरते, तथा तथान्धीकरोति मे हृदयम् । ]

**धात्री**—एदु एदु भट्टिदारिआ । [ एत्वेतु भर्तृदारिका । ]

( निष्क्रान्ताः सर्वे । )

## द्वितीयोऽङ्कः ।

---

प्रस्तुतं वस्तु संहर्तव्यमिदानीं तस्य परिपुष्टत्वात्, सद्यःकरणीयस्य कौतुकमङ्गलस्यैव परिशेषतयेष्टत्वात्तदानीमिति कृत्वा तादृक्प्रस्तावनागर्भवाक्यपरां चेटीमवतारयति—**प्रविश्येति** ।

**तुवरदु इति**—आर्येति धात्रीसंग्राहकं विज्ञेयं, "अस्माकं भट्टिनी भणति" इति वक्तव्यानुरोधात् । अद्य शोभनं नक्षत्रं, नक्षत्रादिकं यज्ज्योतिर्विद्भिर्गणनीयं शोभनकालशोधने तत्सर्वमपि गणयित्वा तैः प्रख्यापितं "अद्य कौतुकमङ्गलनिर्वहणाय शोभनः काल" इति भावः । कौतुकमुद्वाहसूत्रम् । तथा चाह— "कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः । गीतादौ भोगकाले च" इति । तद्बन्धनरूपं मङ्गलं शुभकार्यम् । भट्टिनी स्वामिनी, सा चात्र दर्शकस्य पत्नी । तथा चाहुः—"भट्टिनी द्विजभार्यायां, नाट्योक्त्या राजयोषिति ॥" इति । "देवी कृताभिषेकायामितरासु तु भट्टिनी ॥" इत्यमरः । "अभिषिक्ता तु राज्ञासौ देवीत्यन्या तु भोगिनी । भट्टिनीत्यपरैः" इति अमरटीकासु । "राजपत्न्यस्तु संभाष्याः सर्वाः परिजनेन तु । भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः" इति ( ना० शा० ) ।

**जह जह इति**—मे हृदयमन्धीकरोति जडमातनोति । त्वरमाणेयं चेटीत्यर्थादेवापद्यते । यद्यपि पद्मावती सखीत्वेन, भर्तुर्हितकारित्वेनातितमं तस्या इष्टा तथापि सपत्नीशङ्कयैव केवलं तथावस्थां प्रापितं तत्स्त्रीहृदयमिति विज्ञेयम् ।

**एत्विति**—यथानिदेशं कर्तव्यमेव सर्वमित्याशयः ।

इति दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा विरचितायां स्वप्नवासवदत्तव्याख्यायां द्वितीयोऽङ्कः ।

---

१ भट्टिदारिआ ( भर्तृदारिका ) । २ अन्धआरेण पिहिदं विअ० ( अन्धकारेण पिहितमिव० ) । ३ पविसदु दाव अब्भन्तरं० ( प्रविशतु तावदभ्यन्तरं० ) ।

## तृतीयाङ्कस्य विषयः ।

द्वितीयाङ्कपरिसमाप्त्यवसरे यत्खलूक्तं वासवदत्तया "अन्धीकरोति मे हृदय"मिति तदवस्थमेव तद्धारयन्ती सपत्नीशङ्काव्याकुलमानसा प्रवृत्तेऽपि राजकुलप्रासादे महत्युत्सवे पद्मावतीकौतुकमङ्गलकार्यस्वरूपे, व्यग्रेषु च तत्र सर्वेषु जनेषु, स्वात्मानं किञ्चिद्विनोदयितुं वासवदत्ता प्रमदवनं प्रविशति । पद्मावतीकौतुकमाला च महाकुलप्रसूतया स्निग्धया निपुणया चावन्तिकयैव (वासवदत्तयैव) गुम्फनीयेति दर्शकपत्न्याऽऽदिष्टम् । तदर्थं च पुष्पभाजनं गृहीत्वा काचिच्चेटी तामेवान्विष्यन्ती तत्रैवागच्छति । तदभिप्रायं विज्ञाय "एतदपि मया कर्तव्यमासीत् । अहो अकरुणाः खल्वीश्वराः" इतिप्रकारेण पुनरप्यधिकमेव संतप्यमाना सा पद्मावतीस्नेहपरिवशतया यथोचितकार्यव्याकुलतया च केवलं तत्कार्यमङ्गीकरोति, मालां गुम्फित्वाऽर्पयति च । अनन्तरं तत्रापि विनोदमलभमानाऽसौ निद्रयाऽपि तावदंशेनापि स लभ्येत वेति कृत्वा शय्यास्थानमुद्दिश्य गच्छति ।

## तृतीयाङ्के स्थल-कालयोर्निर्णयः ।

**स्थलम्**—मगधदेशाधिपस्य दर्शकस्य राज्ञोऽन्तःपुरस्य समुचिते प्रमदवने कश्चित्प्रशान्तो विभागः । द्रष्टव्यं वासवदत्तावचनं—"विवाहामोदसङ्कुले अन्तःपुरचतुःशाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवने" इति । स्वभर्तृद्वितीयोद्वाहवृत्तमसहमाना स्वात्मानं विनोदयितुकामा वासवदत्ता तत्प्रविशति । तत एव तृतीयाङ्कस्य वस्तु समारभ्यते ।

**कालः**—द्वितीयाङ्के सूचितः स एव दिवसो यत्र पद्मावत्याः कौतुकमङ्गलकार्यं सुनिश्चितमासीत् । कौतुकमङ्गलकार्यं च सम्यग्रीत्याऽजायतेति तु स्पष्टं ज्ञायते । "एष जामाता मणिभूम्यां स्नायति" इत्यादिना स्नानकालः सूच्यते; तेन च द्वितीयः प्रहरोऽविज्ञातं स्पष्ट इति सूक्ष्मया दृष्ट्यावगन्तव्यम् ।

# अथ तृतीयोऽङ्कः ।

( ततः प्रविशति विचिन्तयन्ती वासवदत्ता । )

**वासवदत्ता**—विवाहामोदसङ्कुले अन्तेउरचउस्साले परित्त-जिअ पदुमावदिं इह आअदह्मि पमदवणं । जाव दाणिं भाअधे-अणिव्वुत्तं दुःखं विणोदेमि । ( परिक्रम्य । ) अहो ! अच्चाहिदं । अय्यउत्तो वि णाम परकेरओ संवुत्तो । जाव उवविसामि । ( उपविश्य ) धञ्ञा खु चक्कवाअवहू जा अण्णोण्णविरहिदा ण जीवइ । ण खु अहं पाणाणि परित्तजामि । अय्यउत्तं पेक्खामि त्ति एदिणा मणोरहेण जीवामि मन्दभाआ । [ विवाहामोदसङ्कुलेऽन्तःपुरचतुःशाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवनम् । यावदिदानीं भागधेयनिर्वृत्तं दुःखं विनोदयामि । अहो ! अत्याहितम् । आर्यपुत्रोऽपि नाम परकीयः संवृत्तः । यावदुपविशामि । धन्या खलु चक्रवाकवधूः यान्योन्यविरहिता न जीवति । न खल्वहं प्राणान्परित्यजामि । आर्यपुत्रं पश्यामीत्येतेन मनोरथेन जीवामि मन्दभागा । ]

---

## अथ तृतीयोऽङ्कः ।

स्वभर्तुर्द्वितीयोद्वाहवृत्तमाकर्ण्य तद्गतं च स्वविषयकं स्नेहमपि नैकवारं संस्मृत्य संस्मृत्य केवलं सपत्नीशङ्कयोपक्षिप्तहृदया, भर्त्रा स्वहृदयादनपास्तामपि स्वात्मानमतथाभूतां मन्यमाना वासवदत्ता परं विमनायते । अथ चैवमाक्षिप्तेऽपि तद्धृदये "दग्धं दग्धं पुनरपि पुनश्चन्दनं चारुगन्धं" इति न्यायमनुसरन्निवालौकिकया सरण्या पुनरप्यधिकं दुःखपरिपोषमिच्छंस्तत्रैव विषये सचिन्ताया वासवदत्तायाः प्रवेशमाह—**ततः प्रविशतीत्यादिना** ।

**विवाहामोदसङ्कुले इति**—विवाहः, पद्मावती-उदयनयोः । तस्यामोदेनानन्देन लक्षणया आनन्दयुक्तेन जनेन सङ्कुले व्याप्ते । आमोदश्च "शशिनमुपगतेयं कौमुदी मेघमुक्तं" इत्युक्तप्रकारेण योग्यस्य योग्येनान्वय इति कृत्वा समुद्भूतः, पद्मावतीहृदयानुगुणमेवाखिलं सञ्जातमिति वा कृत्वा तथेति ज्ञेयम् । अन्तःपुरचतुःशाले अन्तःपुरं शुद्धान्तः, राजस्त्रीगृहं, तत्र विद्यमानं चतुःशालं अन्योन्याभिमुखशालाचतुष्टयवेष्टितगृहविभागस्तस्मिन् । "स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनं । शुद्धान्तश्चावरोधश्च" इति अमरः । ( अवस्थितां ) पद्मावतीं परित्यज्य ।



१ सचिन्ता । २ धण्णा ।

( ततः प्रविशति पुष्पाणि गृहीत्वा चेटी। )

**चेटी**—कहिं णु खु गदा अय्या आवन्तिआ। ( परिक्रम्याव-

---

चिन्ताकुलमानसां मां काचिद्विजानीयाद्रहस्यसंभेदश्च भवेत्तस्मान्नैवेदं जनाकीर्णं स्थलमधुना मया सेवनीयमिति मनसि कृत्वा, वस्तुतस्तत्सख्या मया तादृशप्रसङ्गे निर्वर्तयितव्येऽपि कार्यबाहुल्ये तदगणयित्वाऽपि च तां तत्रैव विहायेति भावः। अनेन दुःखातिरेकव्याकुलायास्तस्याः काप्यवस्थाऽऽसीदिति ध्वन्यते। प्रमदवनं अन्तःपुरोचितमुद्यानं। तथा चामरः—"पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्। स्यादेतदेव प्रमदवनमन्तःपुरोचितम्" इति। तदेतद्यत्र राजा सस्त्रीकः क्रीडति। आगतास्मि। भागधेयेन भर्तृविरहकारिणा दैवेन निर्वृत्तं निष्पादितं दुःखं द्वितीयोद्वाहश्रवणसंभवमचिरोद्भूतं नूतनं च, इदानीं जनसंकुलप्रदेशपरीहारेणेहागतत्वात्प्राप्तेऽवसरे विनोदयामि यत्र कुत्रचिद्विषय इह मनः संसज्य तच्छिथिलीकरोमीति। इह प्रमदवने विषयान्तरसंलग्नं मनस्तावताप्यंशेन वा सुस्थं स्यादिति तदाशयः।

**अहो इति**—दुःखापनोदनाय तत्रागताया अपि तत्तस्या न, अन्येऽपि विषये यत्र कुत्रचिच्च यथा तन्मनः संसक्तं स्यादिति हेतुरपि सफलो न, प्रत्युतोदयनविषयिणी चिन्तैव समधिकाऽऽसीदिति ज्ञायतेऽनेन। अत्याहितं, महदनिष्टं सञ्जातमिति। तदेव विविनक्ति—आर्यपुत्रोऽपि नाम परकीयोऽन्यसम्बन्धी संवृत्तः सञ्जातः। अत्र अपिशब्दोऽन्यसंग्राहको न, किन्तु "मदर्थं तथा नाम सन्तप्यापि" "यः खलु मय्यतीवास्निग्धत्सोऽपि" "मया विरहितो जीवितं त्यक्तुकामोऽपि" इत्यादिप्रकारेण सङ्गमनीयः। विमनस्कायास्तस्या युज्यते हि तादृग्युक्तिः। यावदुपविशामि, चिन्तासमाकुलस्य जनस्य दृश्यते हि इयं रीतिर्यदसौ क्षणात्परिक्रामति, क्षणाच्चोपविशति पुनरुत्तिष्ठतीति, तथैवास्या अप्युपवेशनमवगन्तव्यम्। परिक्रमणञ्चाचिरादेवोक्तम्। स्वस्मादपि चक्रवाकीं प्रियजनविरहेण जीवितान्तं कामयमानां बहु मन्यते **धन्येत्यादिना**। चक्रवाकपक्षिणां तु विरहदुःखं संस्कृतकाव्ये तत्र तत्र वर्णितं बहुलमुपलभ्यते। तथाहि—"चक्राङ्गेन वियोगिना बिसलता नास्वादिता नोज्झिता। कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः" इति। अन्योन्यविरहिता परस्परवियुक्ता, स्वप्रियेणेति यावत्। न जीवति। स्वप्रियस्य हेतोर्जीवितत्यागेन सैव प्रशस्यतरेति भावः। यदि ज्ञातमेतत्तत्स्वप्राणधारणेन किमिति चेत्तत्र कारणमाह—**आर्यपुत्रमिति**। मनोरथेनाशया जीवामि प्राणान् धारयामि। विवाहार्थमत्रागतस्यार्यपुत्रस्य मे दर्शनं स्यादित्याशैव केवलं तत्र कारणमिति तदाशयः। द्रष्टव्यमत्र—"बलवती खलु वल्लभजनसंगमाशा यत्तथाविधमप्यनुभववेदनाविह्वलितप्राणमतिकष्टं प्राप्यते" ( कादंबरी )। दर्शकपत्न्या चादिष्टं यत्पद्मावतीकौतुकमङ्गलमाला महाकुलप्रसूतया आवन्तिकयैव गुम्फनीयेति। तदर्थञ्चावन्तिकामन्विष्यन्त्याः पुष्पभाजनहस्तायाश्चेट्याः प्रवेशमाह—**ततः प्रविशतीत्यादिना**।

---

१ पुप्फहत्था।

लोक्य च ।) अम्मो ! इअं चिन्तासुञ्ञहिअआ णीहारपडिहदच-न्दलेहा विअ अमण्डिदभद्दअं वेसं धारअन्दी पिअङ्गुसिळापट्टए उवविट्ठा । जाव उवसप्पामि । (उपसृत्य ।) अय्ये ! आवन्तिए ! को काळो तुमं अण्णेसामि । [क नु खलु गता आर्यावन्तिका । अम्मो ! इयं चिन्ताशून्यहृदया नीहारप्रतिहतचन्द्रलेखेवामण्डित-भद्रकं वेषं धारयन्ती प्रियङ्गुशिलापट्टके उपविष्टा । यावदुपसर्पामि । आर्ये ! आवन्तिके ! कः कालः त्वामन्विष्यामि ।]

**वासवदत्ता—**किण्णिमित्तं ? [किंनिमित्तम् ?]

**चेटी—**अह्माअं भट्टिणी भणादि 'महाकुळप्पसूदा सिणिद्धा णिउणा आवन्तिआ' त्ति । इमं दाव कोदुअमाळिअं गुह्मदु अय्या । [अस्माकं भट्टिनी भणति 'महाकुलप्रसूता स्निग्धा निपुणा आव-न्तिका' इति । इमां तावत्कौतुकमालिकां गुम्फत्वार्या ।]

---

**कहिं णु खु इति**—पद्मावतीं विहाय प्रमदवनमागत्योपविष्टां चिन्ताशून्य-मानसां च तां ज्ञात्वा चेट्या आश्चर्योद्गारः "अम्मो" इति । चिन्ताशून्यहृदया, चिन्तया आध्यानेन शून्यं कार्याकार्यविवेकाग्रहिलं हृदयं यस्याः सा । "स्याच्चिन्ता स्मृतिराध्यानम्" इत्यमरः । नीहारेण तुहिनेन प्रतिहता धूसरिता चन्द्रस्य लेखा इव । यथा तुहिनेन निशाकरस्य लेखा निष्प्रभा संपद्यते तथैवेयमपि विरहदुःखे-नेति भावः । अत्र विरहदुःखं नीहारेण तुलितं वासवदत्ता च चन्द्रलेखयेति तयो-र्बिम्बप्रतिबिम्बभावः सहृदयगम्यः । "अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका च" इत्यमरः । अमण्डितं न विभूषितं तच्च भद्रकं मङ्गलं च वेषं धारयन्ती, सर्वदिनसाधारणमेव वेषं परिगृह्येत्यर्थः । वस्तुतस्तु धारयितव्येऽप्यु-ज्वलवेषे तस्मिन्नहनि तत्रानादरो वासवदत्तायाश्चित्ताक्षेपं बहुलं दर्शयति । अथवा प्रोषितभर्तृकामात्मानं प्रख्यापयन्त्यास्तस्यास्तदुचितमेव सविशेषवेषास्वीकरणम् । प्रियङ्गोः फलिनीवृक्षस्य शिलापट्टके, पट्टमेव पट्टकं पीठमासनं वा । तच्चैतच्छाया-वृक्षस्याधस्तान्मूलप्रदेशे तं परित एवोपवेशनार्थं निर्मीयते तत्र तत्रोद्यानविभागे । कः कालः, तवान्वेषणे इतस्ततः परिभ्रमन्त्या मम सुमहान्समयो व्यतीत इति ।

**किण्णिमित्तमिति**—किंनिमित्तं, केन कारणेन । अन्विष्यसीति शेषः । "अन्विष्यामि"—पदस्याचिरोक्तस्य विपरिणामेनेति ज्ञेयम् ।

**अह्माअमिति**—भट्टिनी दर्शकस्य पत्नी । यत्तयोक्तं तत्तथैव श्रावयति महा-

---



१ णीहारगता पडिबद° (प्रतिपद्°)। २ एतन्नास्ति। ३ एतन्नास्ति। ४ गु० किल।

**वासवदत्ता**—अह कस्स किल गुम्फिदव्वं ? [ अथ कस्मै किल गुम्फितव्यम् ? ]

**चेटी**—अह्माअं भट्टिदारिआए। [ अस्माकं भर्तृदारिकायै । ]

**वासवदत्ता**—( आत्मगतम् ) एदं[1] पि मए कत्तव्वं आसी ! अहो अकरुणा खु इस्सरा ! [ एतदपि मया कर्तव्यमासीत् ! अहो अकरुणा खल्वीश्वराः ! ]

**चेटी**—अय्ये ! मा[3] दाणिं अण्णं चिन्तिअ। एसो जामादुओ मणिभूमीए ह्वाअदि । सिग्घं दाव गुह्मदु अय्या । [ आर्ये ! मेदा-

---

कुलेत्यादिना । महाकुलप्रसूतेति वचनं वासवदत्ताया रुचिरामाकृतिमेव दृष्ट्वा न तु तत्र तस्या राजदारिकात्वज्ञानं प्रयोजकमिति विज्ञेयम् । पद्मावत्याः साकं प्रियसखीत्वेन व्यवहरन्त्यपि सा स्वीयवृत्त्या सर्वेषामन्तःकरणान्याजहार अतः स्निग्धा इति । निपुणेत्यनेन च कुसमशेखरमालादिग्रथने तद्धस्तः कृतमुख आसीदिति ध्वन्यते । कौतुकमालां गुम्फतु । मालाया गुम्फनं न संभवति, अपि तु पुष्पाणामेव तत् । इमानि पुष्पाणि गृहीत्वा कौतुकमालां गुम्फत्विति तदर्थः । अयञ्चोपचरितः प्रयोगः "ओदनं पचती"तिवत् । गुम्फनक्रियायाः प्राङ्मालाया असिद्धेः ।

**अहेति**—कस्मै । जनायेत्यध्याहार्यम् । कस्मै जनायार्पणीया सा माला यन्मया गुम्फितव्यं मालागुम्फनं कर्तव्यमित्यन्वयः । यदि जामात्रर्थं ( उदयनार्थं ) वा मालागुम्फनं मया कर्तव्यं तदपि मे सौभाग्यमिति कृत्वा तथाभूतः सामान्यः प्रश्नः । तद्गतविचारताद्रूप्यं च तस्या ज्ञायतेऽनेन ।

**अह्माअमिति**—अस्माकमित्यनेन पद्मावती सर्वेषामपि जनानां प्रियेत्याप-द्यते, सा तवापि प्रियसखी, अतो न वेलातिक्रमः कार्य इति ध्वनिः ।

**एदं पीति**—एतदपि सपत्न्यर्थं तच्छुभेच्छापूर्वकं कौतुकमालागुम्फनं मया कर्तव्यं कर्तव्यत्वेन निष्पादनीयमासीत् । एतादृशानि वा भाग्याक्षराणि मे लिखित-पूर्वाणीति तदाशयः । कर्तव्यं च तत् दर्शकपत्न्या संदिष्टमिति, पद्मावती च तत्प्रियसखीत्युभयथापि । यत्र खल्वहं न्यस्ता सा मे भवित्री सपत्नी संजातेति कष्टं तत्रापि तत्कौतुकमङ्गलमालागुम्फनं च मद्धस्तेनैवेति कष्टपरम्परा इति कृत्वैव तस्याः शोकोक्तिः—अहो इति । कष्टतममिदमिति यावत् । अकरुणा निरनुकम्पाः खलु ईश्वराः । एतादृशान्यतिनिष्ठुराणि कृत्यानि घटयितारो देवा अनुकम्पालेशमप्यभ-जन्तो वाच्यतां यान्तीति भावः ।

शोकपारवश्यादेवं विचिन्तयन्तीं वासवदत्तां वीक्ष्य वेलातिक्रमणमसहमानाया-श्चेट्यास्त्वरावचनम्—

---

१ इदं वि। २ होइ ( भवेत् )। ३ अलं० अणुचि० ।

नीमन्यचिन्तयित्वा । एष जामाता मणिभूम्यां स्नायति । शीघ्रं तावद्गुम्फत्वार्या । ]

**वासवदत्ता**—( आत्मगतम् ) ण[1] सक्कुणोमि अण्णं चिन्तेदुं । ( प्रकाशम् । ) हळा ! किं दिट्ठो जामादुओ ? [ न शक्नोम्यन्यच्चिन्तयितुम् । हला ! किं दृष्टो जामाता ? ]

**चेटी**—आम, दिट्ठो भट्टिदारिआए सिणेहेण अह्माअं कोदूहळेण अ । [ आम्, दृष्टो भर्तृदारिकायाः स्नेहेनास्माकं कौतूहलेन च । ]

**वासवदत्ता**—कीदिसो जामादुओ ? [ कीदृशो जामाता ? ]

**चेटी**—अय्ये ! भणामि दाव ण ईरिसो दिट्ठपुरुवो । [ आर्ये ! भणामि तावन्नेदृशो दृष्टपूर्वः । ]

---

**अय्ये इति**—आर्ये ! इदानीं पद्मावतीविवाहकार्ये व्यापृतान्तेषु सर्वेष्वपि जनेषु करणीयबहुलकार्योचितेऽवसरे । मा अन्यत् मङ्गलकार्यस्वरूपं विहाय चिन्तयित्वा । सर्वात्मना तत्रैव चिन्तयितव्येऽन्यविषयिणी चिन्ता न कार्येत्यर्थः । स्नायति, "ष्णै वेष्टने । शोभायामित्येके । शौचे इत्यन्ये ।" भौवादिकोऽयं शौचार्थे ग्राह्यः ।

स्नायतीत्यनेन कौतुकमालादिधारणस्य समयः प्रत्यासन्न इति सूचितम् ।

**ण सक्कुणोमीति**—अन्यत्, पद्मावतीविवाहे निष्पादनीयानि कार्याणि विहायेति । अथवा प्रवृत्तेऽपि भर्तृद्वितीयोद्वाहकार्ये तटस्थयेव मया सर्वस्मिन्नवलोकयितव्ये, समये समये च कार्यबाहुल्यात्तल्लेशस्य स्वीकर्तव्यत्वेनापतिते कथं न शक्नोमि मद्दुःखं विचारयितुमिति काकूक्तिरपि । "हला" इति चेटीमुद्दिश्यामन्त्रणं चिन्त्यमेव । "अण्णं"—( अन्यं ) मद्भर्तारं विहायान्यं विचारयितुमित्यपि । झटिति प्रकृतमनुसृत्य पृच्छति–किमिति ।

**आमेति**—आम् इति एवमर्थेऽव्ययम् । जामातृदर्शनत्वरायां द्वौ हेतू अवतारयति भर्तृदारिकाया इत्यादिना । भर्तृदारिकायां पद्मावत्यां विद्यमानेन स्वस्य स्नेहेन, भर्तृदारिकायाः स्वस्मिन्विद्यमानेन स्नेहेन हेतुना वेत्येको हेतुः । कौतूहलेन च, राजजामाता भर्तृदारिकाया भविता भर्तेति कृत्वा कुतूहलमन्यो हेतुः । प्रायः सर्वतरुणरमणीसामान्यमेवेदं कुतूहलमवगन्तव्यम् ।

**कीदिसो इति**—तटस्था इव पृच्छति मा पुनस्तस्याः शङ्कोद्भवः स्यादिति । कीदृशः किं स्वरूपः, सुन्दरो वासुन्दरो वेति । रमणीसाधारणप्रश्नेऽप्यस्मिन्नुदयनगतमनामयज्ञानं तस्या इष्टमित्यनुसंधेयम् ।

**अय्ये इति**—वचनं प्रयुञ्जानायास्तस्याः "भणामि तावत्" इति वचनेन "सत्यमेव भणामि तावन्नात्र शङ्कालेशोऽपि" इत्यापद्यते । नेदृशो दृष्टपूर्वः पूर्वं दृष्टः ।

---

१ कहं ण ( कथं न ) । २ ईदिसो जामादुओ अदिट्ठपुरुवो । ( ईदृशो जामाता अदृष्टपूर्वः । )

**वासवदत्ता**—हळा ! भणाहि भणाहि किं दंसणिओ ? [ हला ! भण भण किं दर्शनीयः ? ]

**चेटी**—सक्कं भणिदुं सरचावहीणो कामदेवो त्ति । [ शक्यं भणितुं शरचापहीनः कामदेव इति । ]

**वासवदत्ता**—होदु एत्तअं । [ भवत्वेतावत् । ]

**चेटी**—किण्णिमित्तं वारेसि ? [ किंनिमित्तं वारयसि ? ]

**वासवदत्ता**—अजुत्तं परपुरुससङ्कित्तणं सोदुं । [ अयुक्तं परपुरुषसंकीर्तनं श्रोतुम् । ]

**चेटी**—तेण हि गुह्मदु अय्या सिग्घं । [ तेन हि गुम्फत्वार्या शीघ्रम् । ]

---

**हळा इति**—अदृष्टपूर्वो दर्शनीयो यथा भवति तथाऽदर्शनीयोऽपीति तत्र विशेषतो मे जिज्ञासेति तत्तात्पर्यम् । इदमेव मनसि कृत्वा विशिष्य कथनार्थं भण भणेति द्विर्वचनेन तस्याश्चेटीं प्रति त्वरावचनम् ।

**सक्कमिति**—शक्यं भणितुं, नात्रातिशयितोक्तिर्भवेदिति तदर्थः । शरचापाभ्यां हीनो वियुक्तः कामदेवो मन्मथ इति । पुरुषसौन्दर्ये वर्णयितव्ये कामदेवः सर्वदैवोपमानस्थले स्थाप्यते काव्यरसिकैः । अत्र तु तस्यारोपेन रूपकालङ्कारः । केवलं शरचापहीन इत्यनेन न्यूनतोक्ता तेन च न्यूनत्वोक्त्याऽसावित्यवगन्तव्यम् । तथा च **कुवलयानन्दे**—"रूपकं तन्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः" इति । तत्रैव चोदाहरणं "अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शम्भुर्भगवान् बादरायणः" इति ।

परपुरुषवर्णनं परिजिहीर्षन्तीमिवात्मानं सन्दर्शयन्ती आह—**होदु इति।** कामदेव इव स्वस्य भर्तेदानीमन्यदीयः संवृत्त इति तद्वृत्तश्रवणेऽरुचिरिति तदन्तःकरणसंवेदनाप्रतिबिम्बं चात्र स्फुटमिति संवेद्यम् ।

**किण्णिमित्तमिति**—किंनिमित्तं कस्माद्धेतोर्वारयसि प्रतिषिध्यसि । कारणजिज्ञासायां तथाभूतः प्रश्नः ।

**अजुत्तमिति**—परपुरुषस्य सङ्कीर्तनं वर्णनं श्रोतुमयुक्तम् । कुलस्त्रीणामिति शेषः । प्रतिषेधनेऽयमेव हेतुरिति तदर्थः । अनिर्वर्णनीयं परकलत्रमिति यथा पुरुषाणां समुदाचारस्तथैव स्त्रीणामपि परपुरुषविषये इति दिक् ।

जामातृवर्णनरसभरा चेटी तत्र दोषमपश्यन्त्यपि परपुरुषनामग्रहणेनैव समुदाचारभङ्गभीत्या प्रकृतमारभते—

**तेण हीति**—तेन हि, हेतुनेति यावत् । परित्यक्तो मया स विषय इति शेषः ।

**वासवदत्ता**—इअं गुह्मामि । आणेहि दाव । [ इयं गुम्फामि । आनय तावत् । ]

**चेटी**—गह्णदु अय्या । [ गृह्णत्वार्या । ]

**वासवदत्ता**—[1]( वर्जयित्वा विलोक्य[2] ) इमं दाव ओसहं किं णाम ? [ इदं तावदौषधं किं नाम ? ]

**चेटी**—अविहवाकरणं णाम । [ अविधवाकरणं नाम । ]

**वासवदत्ता**—( आत्मगतम् ) इदं बहुसो गुह्मिदव्वं मम अ पदुमावदीए अ । ( प्रकाशम् ) इमं दाव ओसहं किं णाम ? [ इदं बहुशो गुम्फितव्यं मम च पद्मावत्याश्च । इदं तावदौषधं किं नाम ? ]

**चेटी**—सवत्तिमद्दणं णाम । [ सपत्नीमर्दनं नाम । ]

---

**इअमिति**—इयं गुम्फामि । न मया वेलातिक्रमणं क्रियते तत्र । यथा भर्तृदारिकाकौतुकमङ्गले तवेष्टा त्वरा तथा ममापि सा तत्प्रियसखीत्वेनेति भावः । आनय तावत्, पुष्पभाजनमिति कर्म प्रकृतसंलापेनाध्याहार्यम् ।

**गह्णदु इति**—चेट्याः पुष्पभाजनवितरणमुक्तमनेन ।

**इमं दावेति**—वर्जयित्वा, ( वृज् वर्जने ) वर्जनमिह निष्कासनं, पुष्पभाजनात्पुष्पाणि बहिरुद्धृत्येति यावत् । विलोक्य दृष्ट्वा । क्रियमाणायां च मधुररचनायां पुष्पादीनां यथायोग्यसंनिवेशार्थं तस्यास्तथाऽवलोकनं युक्तमेव । कुसुमप्रचयेऽनभिज्ञातानि पल्लवाङ्कुराणि मूलादीनि वा वीक्ष्य पृच्छति इदमित्यादिना । ओषधिरेवौषधम् । "ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम्" इत्यमरः । "ओषधेरजातौ" ( पा० सू० ५।४।३७ ) इति स्वार्थेऽण् । कौतुकमालादौ वधूवरयोरनिष्टनिवारणार्थमोषधिनिवेशनं समुदाचार आसीत्पुरातने काले ।

**अविहवाकरणमिति**—अविधवा क्रियतेऽनेनेति । अस्यौषधस्य धारणेन धारयित्र्या भर्तृवियोगः सुलभो नैवेति तस्यालौकिको गुणः, एवं च तथा साङ्केतिकं नामेति भावः ।

**इदमिति**—इदं अविधवाकरणमौषधं मम मदर्थं पद्मावत्याः पद्मावत्यर्थं च बहुशो बह्वंशेन गुम्फितव्यम् । सपत्नीभावेन द्वयोरपि समपरिमाणेनैव भर्ता तत्र विषयेऽभिलषणीय इति गर्भितो हेतुस्तद्वचने । अन्यदौषधमुद्दिश्य पृच्छति इदमित्यादिना ।

**सवत्तिमद्दणमिति**—सपत्नी मृद्यतेऽनेनेति । यस्य धारणेन सर्वा अपि सपत्न्यः स्वस्य परतन्त्रा भवन्तीति तादृग्गुणोपेतं तदौषधमिति तत्तस्य सङ्केतितं नामेति हृदयम् ।

---

१ ( आत्मगतम् ) इअं गुह्मामि मन्दभाआ । २ विलोक्य प्रकाशम् ।

वासवदत्ता—इदं ण गुह्मिदव्वं । [ इदं न गुम्फितव्यम् । ]

चेटी—कीस[1] ? [ कस्मात् ? ]

वासवदत्ता—उवरदा तस्स भय्या, तं णिप्पओअणं त्ति । [ उपरता तस्य भार्या, तन्निष्प्रयोजनमिति । ]

( प्रविश्यापरा )

चेटी—तुवरदु तुवरदु[2] अय्या । एसो जामादुओ अविहवाहि अब्भन्तरचउस्साळं पवेसीअदि । [ त्वरतां त्वरतामार्या । एष जामाता अविधवाभिरभ्यन्तरचतुःशालं प्रवेश्यते । ]

वासवदत्ता—अइ[3] ! वदामि, गह्ण एदं । [ अयि ! वदामि गृहाणैतत् । ]

---

इदमिति—इदं सपत्नीमर्दनं नामौषधं । न गुम्फितव्यम्, न तेन पद्मावत्याः किमपि कार्यम् । अतो नात्र तस्यावकाशो देयः ।

कीसेति—कस्मात्, न गुम्फितव्यमित्यनुषज्यते । सपत्नीमर्दनागुम्फने हेतुरुच्यतामिति भावः । प्रतिपादितेऽर्थे हेत्वर्थं पृष्टा वासवदत्ता तमेवावतारयति—उवरदेति । उपरता मृता तस्य भार्या । भार्येत्येकवचनेनान्याः सपत्न्यो नेति सूचितम् । एकपत्नीव्रतस्योदयनस्यैकैव भार्या वासवदत्ता प्रियतमाऽऽसीत्सा च ग्रामदाहे पञ्चत्वं प्राप्ता । एवञ्च सपत्न्यभावात् तत् सपत्नीमर्दनौषधस्य कौतुकमालायां गुम्फनं निष्प्रयोजनं, न तेन कोऽपि गुण आधीयत इति ।

प्रविश्य, रङ्गमिति शेषः । अपरा, चेटीत्यनुषज्यते ।

तुवरदु इति—त्वरतां त्वरतामिति वीप्सया मालाधारणसमयः सन्निहित इति प्रज्ञाप्यते । तदेव सविशेषं निर्दिशन्त्याह—एष इति । जामातेति भविष्यत्कालसमुचितमप्यामन्त्रणं तदानीमात्मीयतया न विरुध्यते । अविधवाभिर्जीवद्भर्तृकाभिः । अभ्यन्तरे यच्चतुःशालं अन्योन्याभिमुखशालाचतुष्टयवेष्टितगृहविभागः, तत् प्रवेश्यते । तदेवैतत्प्रायश्चतुःशालं यत्र पद्मावतीं विहाय वासवदत्ता प्रमदवनं प्रविष्टा, यत्र च विवाहमङ्गलकार्यं निर्वर्तनीयं सुनिश्चितमासीत् । तथाभूताभिरेवाविधवाभिरनुगतो वरो विवाहमङ्गलभूमिमवतरतीति दृश्यते हि आचारः ।

अइ इति—अयि वदामि गृहाणैतत् सद्योगुम्फितं माल्यं । त्वयोच्यते त्वरतामिति मया पुनः सुगुम्फितं तद्गृह्यतामिति । न मया विलम्बः कृत इति तदाशयो विज्ञेयः ।

---

१ किण्णिमित्तम् ( किंनिमित्तम् ) । २ दाव ( तावत् ) । ३ इअं तुवरामि भद्दे ! गह्ण एदं ।

**चेटी**—सोहणं। अय्ये! गच्छामि दाव अहं। [शोभनम्। आर्ये! गच्छामि तावदहम्।]

(उभे निष्क्रान्ते।)

**वासवदत्ता**—गदा एसा। अहो अच्चाहिदं। अय्यउत्तो वि णाम परकेरओ संवुत्तो। अविदा सय्याए मम दुक्खं विणोदेमि यदि णिदं लभामि। [गतैषा। अहो अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः। अविदा शय्यायां मम दुःखं विनोदयामि यदि निद्रां लभे।]

(निष्क्रान्ता।)

## इति तृतीयोऽङ्कः।

---

**सोहणमिति**—शोभनमिति मालाप्रशंसा, अल्पेऽपि काले निर्वर्तित-तादृगतिसुन्दररचनासंनिवेशायास्तस्याः सा वा। मालास्वीकारोऽपि ज्ञायतेऽनेन। कृतकार्या गमनाभ्यनुज्ञां याचते गच्छामीति। तथा त्वरमाणामपरां चेटीं दृष्ट्वा प्रथमा गमनायापृष्ट्वैव प्रचलति, यच्च ज्ञायते "उभे निष्क्रान्ते" इति वाक्येन।

**गदा एषा इति**—गता एषा, कौतुकमालां गृहीत्वेति शेषः। तद्धारणरूपं मङ्गलं सद्य एव भविष्यति, विवाहश्च निर्वर्तेत, महत्कष्टतरमापतितमिदमिति भावः। अविदेति भृशविषादे। स च स्वस्य भर्तुः परकीयत्वशङ्काप्रभवः। एवमेव विचिन्तयन्त्या मम पुनर्दुःखं वर्धेतैव नात्र तच्छमनोपायः कश्चिदवलोक्यतेऽतो निद्रैव मे शरणमिति कृत्वाऽऽह—शय्यायां ममेति। यदि निद्रां लभे, सापि मेऽधुना दुःखातिरेकाद्दुर्लभाधन्याया इति भावः। तृतीयोऽङ्कः समाप्तिं नीतः "निष्क्रान्ता" इति।

इति दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा विरचितायां स्वप्नवासवदत्तव्याख्यायां तृतीयोऽङ्कः।

---

१ जाव दाणिं भाअधेअणिव्वुत्तं दुक्खं विणोदेमि।

## चतुर्थाङ्कस्य विषयः ।

उदयनस्य राज्ञो नर्मसुहृदो विदूषकस्य वसन्तकनाम्नः प्रथममेव संदर्शनमत्र । राज्ञा साकं नानानर्थानुपभुञ्जानस्य तस्यौदरिकस्य कान्यपि कष्टमयान्यहान्यतीतानि । पद्मावतीविवाहप्रसङ्गेन पुनर्यथेष्टाहारविहारादिकेनाकण्ठं संतृप्तोऽसौ अहरहः कर्तव्येऽपि भोजनेऽनादृत इतस्ततः स्वच्छन्देन विहरन् भोजनविपरिणामक्लिष्टस्तदेव सततं द्विषन्नास्ते । पद्मावत्या साकमुदयनस्य विवाहस्तु निर्वृत्त एवेति पूर्वाङ्के कथितप्रायमेव । अथ कदाचित्पद्मावती सपरिवारा वासवदत्तया सह शेफालिकागुल्मकाः कुसुमिता न वेति परिज्ञानाय प्रमदवनं प्रविशति । तत्र च प्रवृद्धासु मिथो विस्रम्भकथासु राज्ञ उदयनस्य स्वस्मिन् यावान्स्नेहस्तावान् तदधिको वा वासवदत्तायामिति पद्मावतीमुखादेव शङ्काप्रवाहः । अत्रान्तर एव सवसन्तको राजा उदयनोऽपि तमेवोद्देशमुद्दिश्यागच्छति । तयोरपि प्रवृत्ते पद्मावतीं वासवदत्तां चोद्दिश्य संलापे वासवदत्तागुणान्स्मृत्वा राजा मुह्यति । एतच्चावसरं लब्ध्वा पद्मावती सहसा प्रविश्य वसन्तकानीतेन जलेन मुखोदकमुपनीय तत्र स्वावस्थानं तस्मै प्रख्यापयति । उदयनोऽपि सत्यवस्तुपरीहारेण अलीकमेव मोहकारणं तद्हृदयव्यथामाशङ्कमानस्तस्यै कथयति ।

## चतुर्थेऽङ्के स्थल-कालयोर्निर्णयः ।

**स्थलम्**—प्रवेशके च वसन्तकचेट्योः संलापेन ज्ञायते यत्प्रासादस्यैकस्मिन् विभागे तयोः स प्रवृत्त इति । ततः पद्मावत्या वासवदत्तया सह प्रवेशः प्रमदवन एव । तच्च ज्ञायते चेट्याः "किंनिमित्तं भर्तृदारिका प्रमदवनमागता" इति वचनात् । तदेवैतत्प्रमदवनं यत्र कन्दुकक्रीडापरा पद्मावती, भर्तृविरहदुःखदुःखिता वासवदत्ता चाचिरादेव पूर्वाङ्कयोर्दृष्टा । शेफालिकागुल्मकाः कुसुमिता न वेति ज्ञातुं पद्मावती सपरिवारा प्रविशति, तत एव चतुर्थाङ्कगतं वस्तु प्रारभ्यते ।

**कालः**—पद्मावत्युदयनयोर्विवाहः संवृत्त एवेति निश्चितमेव । यतो मोदकखाद्यानि भक्षयतो वसन्तकस्य कुक्षिपरिवर्तः संवृत्तस्ततो ज्ञायते विवाहसमयादूर्ध्वं पञ्चषाणि दिनानि व्यतीतानीति । वसन्तकचेट्योः संवादे सुस्पष्टमिदं यत्स स्नानकाल आसीद्यत्सा पृच्छति "अपि स्नातो जामाता" इति । स च कालः द्वितीयप्रहरारम्भ एव संभवति । भोजनानन्तरं प्रमदवने सर्वेषां प्रवेशः कल्प्यते, स च द्वितीये प्रहरे । तथा च विदूषकः "ही ही शरत्काल‌तीक्ष्णो दुस्सह आतपः" इति । अङ्कसमाप्तिश्च तृतीयप्रहरारम्भे विदूषकेण तथैवोक्तत्वात् । "उचितं तत्रभवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जनदर्शनम्" इति ।

## अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति विदूषकः । )

**विदूषकः**—( सहर्षम् ) भो ! दिट्ठिआ तत्तहोदो वच्छराअस्स अभिप्पेदविवाहमङ्गळरमणिज्जो काळो दिट्ठो । भो ! को णाम एदं जाणादि—तादिसे वयं अणत्थसळिळावत्ते पक्खित्ता उण उम्मज्जिस्सामो त्ति । इदाणिं पासादेसु वसीअदि, अन्तेउरदिग्घिआसु ह्णाईअदि, पकिदिमउरसुउमाराणि मोदअखज्जआणि खज्जीअन्ति त्ति अणच्छरसंवासो उत्तरकुरुवासो मए अणुभवीयदि । एक्को खु महन्तो दोसो, मम आहारो सुट्ठु ण परिणमदि । सुप्पच्छदणाए सय्याए णिद्दं ण ळभामि, जह वादसोणिदं अभिदो विअ वत्तदि त्ति पेक्खामि । भो ! सुहं णामअपरिभूदं अकळ्ळवत्तं च ।

---

### अथ चतुर्थोऽङ्कः ।

उदयनस्य पद्मावत्या साकं विवाहस्तु संवृत्त इति तु पूर्वं प्रतिपादितमेव । तत उर्ध्वं नायिकाया नायकविषये रतिपरिपोषोऽत्यावश्यक इति मत्वा स इह प्रपञ्च्यते । अस्वस्थचित्ताऽपि वासवदत्ता स्वभर्तुर्हितं कामयमाना सपत्नीसंनिधावप्यविकृतचित्तामिवात्मानं संदर्शयन्ती दिनान्यतिवाहयति । वासवदत्तागुणान्संस्मृत्य संस्मृत्य राज्ञा नैकवारं संतप्यत इति विज्ञायापि पद्मावत्या वासवदत्तासौभाग्यं प्रशस्यते । न तन्मनसि कापीर्ष्या दृढं पदमकरोत् । अथैतत्सर्वं प्रतिपिपादयिषितं प्रस्तोतुं प्रथमं प्रवेशकमिच्छन् राज्ञः सुहृदं वसन्तकमवतारयति **तत** इत्यादिना ।

विदूषकस्य सामान्यं स्वरूपमिदं विज्ञेयम्—

"कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥" इति । ( सा० द० )

**सहर्षमिति**—हर्षश्च यथेच्छाहारविहारादिकेनौदरिकस्य तस्य महाब्राह्मणस्योपपन्न एव ।

**भो दिट्ठिआ इति**—तत्रभवतः श्रेष्ठस्य वत्सराजस्योदयनस्य । अभिप्रेत इष्टः पूर्वं सुनिश्चितो वा यो विवाहस्तस्य मङ्गलं तेन रमणीय आल्हादकरः । अथवा अभिप्रेतविवाहेन मङ्गलो रमणीयश्चेत्यपि । विवाहस्याभिप्रेतत्वं पद्मावतीहृदयानुगुणवरलाभेन यौगन्धरायणप्रभृतिभिरमात्यैस्तथैव प्रथमं विनिश्चितमासीदिति कृत्वा वा सिध्यति । कालः समयोऽवस्था वा दृष्टोऽनुभूतिविषयं प्रापितः । तदेतत्सर्वमस्माकं सुदैवेनैव परिणतं नातोऽन्यथेति दिष्ट्याशब्दसंप्रयोगाज्ज्ञायते । यद्यपि दिष्ट्येति आनन्दार्थेऽव्ययं तथापि प्रकृतमनुरुध्याग्रिममपि सन्दर्भं विज्ञाय पूर्वोक्तं न विरुध्यते । को जानाति—एतादृशि, एतादृगेवास्माकं जनिकी अज्ञानादित्यर्थः ।

[ भोः ! दिष्ट्या तत्रभवतो वत्सराजस्याभिप्रेतविवाहमङ्गलरमणीयः कालो दृष्टः । भोः ! को नामैतज्जानाति—तादृशे वयमनर्थसलिलावर्ते प्रक्षिप्ताः पुनरुन्मङ्क्ष्याम इति । इदानीं प्रासादेषूष्यते, अन्तःपुरदीर्घिकासु स्नायते, प्रकृतिमधुरसुकुमाराणि मोदकखाद्यानि खाद्यन्त इत्यनप्सरस्संवास उत्तरकुरुवासो मयानुभूयते । एकः खलु महान् दोषः, ममाहारः सुष्ठु न परिणमति, सुप्रच्छदनायां शय्यायां निद्रां न लभे, यथा वातशोणितमभित इव वर्तत इति पश्यामि । भोः ! सुखं नामयपरिभूतमकल्यवर्तं च । ]

---

"अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" (पा० सू० ३।३।१४५ ॥) अनवक्लृप्तिरसंभावना । न संभावयामि भवान् हरिं निन्देत् । इति असंभावनायां लट्प्रत्ययोऽवगन्तव्यः । तादृशे इति—तादृशे, दुस्तीर्ये इति यावत् । अनर्थ एव सलिलावर्तः अम्भसां भ्रमस्तस्मिन् । "स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः । अथवा अनर्थ एव सलिलं तस्य आवर्तस्तस्मिन्नित्यपि । अनर्थस्य स्वरूपं तु लावाणकग्रामस्य दाहः, वासवदत्तायौगन्धरायणयोस्तस्मिन्नाशः, स्वसुहृदो राज्ञ उदयनस्य तथा प्रियाविरहदुःखेनानवस्थानं शत्रोश्च राज्याक्रमणादिनोत्रास इति विज्ञेयम् । अनर्थे सलिलावर्तारोपाद्रूपकं, "रूपकं रूपितारोपाद्विषये निरपह्नवे" इति तत्स्वरूपात् । प्रक्षिप्ताः हठान्निक्षिप्ताः, निष्ठुरेण दैवेनेति शेषः । वयं पुनरुन्मङ्क्ष्याम इति—क एतज्जानातीत्यत्रान्वयोऽनुसंधेयः । सलिलावर्ते प्रक्षिप्तं हि वस्तु जलवेगेन साकं भ्रममापादितमधोऽध एव गच्छति पुनरुन्मज्जनं च तस्य दुराशाव्याप्तं तथैव स्वविषयेऽपीति तदाशयः । अत एव तथानुभूयमानं मङ्गलं वीक्ष्यासंभावनाग्रस्तमानसस्य तस्य तादृश्युक्तिः । उन्मङ्क्ष्यामः उन्मज्जनं समनुभविष्याम इति । अनर्थसलिलावर्तादुन्मग्नोऽसौ स्वावस्थां तदानींतनीं प्रकटयति—इदानीमित्यादिना । इदानीं, पद्मावत्युदयनविवाहमङ्गलस्योत्तरस्मिन्नस्मिन्समये । प्रासादेषूष्यते, जामातुर्वयस्य इति कृत्वा सर्वेऽपि प्रासादाः सुलभप्रवेशास्तस्यासन्निति ज्ञायते । शत्रुणा निष्कासितेन वयस्येन साकं परिभ्रमतस्तस्य प्रासादसौख्यं मध्ये कानिचिद्दिनानि विलुप्तमासीत्तदिदानीं नेति तदाशयः । अन्तःपुरोचितासु दीर्घिकासु वापीषु स्नायते । "वापी तु दीर्घिका" इत्यमरः । पूर्वोक्तानर्थागमे तु तेन दैवहतेन कदाचिद्दिरिनदिकास्वपि स्नातं भवेदित्येव हेतोस्तस्यात्रोल्लेखः । प्रकृत्या स्वभावतो मधुराणि सुकुमाराणि च मोदकास्तत्स्वरूपाणि खाद्यानि खाद्यन्ते यथेष्टं स्वाद्यन्ते । इति इत्येव हेतोः । अनप्सरस्संवासः न विद्यतेऽप्सरसां संवासो यत्र अप्सरस्सहवासविरहितः । "स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः" इत्यमरोक्तदिशाऽप्सरस्शब्दः स्त्रियां बहुवचने प्रयुज्यते तत्र तत्र । बहुषु इति प्रायो वादः । तथा च शब्दा-

र्णवः—"स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि" इति। ता एता स्वर्भुवि सौन्दर्याधिक्यसंपन्ना नृत्यगानादौ कुशलाः स्वर्वेश्या इति सुप्रसिद्धम्। उत्तरकुरुवास इति—उत्तरकुरुषु वासः। ते च देवभूमित्वेन सर्वस्वर्गसुखदातृत्वेन च तत्र तत्रोल्लिख्यन्ते। महाभारते चैतेषां वर्णनं बहुलमुपलभ्यते। नीलाख्यपर्वतस्य दक्षिणतः मेरोः पार्श्वे तथोत्तरे विभागे प्रसृतस्य प्रदेशस्य नाम उत्तराः कुरव इति। तेषां च सिद्धादिनिषेवितत्वेन न पुनर्मानुषाणां प्राकृतानां तत्र प्रवेशः। तत्रस्थाः स्त्रियश्चाप्सरोपमाः प्रियदर्शनाः कामचाराः, जनाश्च मुदितमानसाः शुक्ला अभिजनसंपन्नाः। यत्र वृक्षाः सदैव पुष्पफलभराढ्या विराजन्ते, सर्वाऽपि भूमिर्मणिप्रचुरा स्वसंपन्नतां प्राकट्यं नयति, निवासिनश्च विरजोम्बरसंवृताः सुखावहान्दिव्यभोगानुपभुञ्जाना यौवनस्था दशवर्षशतानि जीवन्ति इति। एवं च ज्ञायते यदयं स्वर्गतुल्यः प्रदेशोऽधुना काश्मीराख्यं भूविभागं सविशेषं द्योतयतीति। तदेतां संपन्नतां स्मृत्वा विदूषको राजगृहमुत्तरकुरुभिस्तोलयति। सर्वेऽपि भोग्यपदार्थास्तत्र तस्योपनीता आसन्न पुनः केवलमप्सरसां सहवास इत्युत्तरकुरुभ्यो राजगृहस्य व्यतिरेकः। दोषो न्यूनता। तामेव वक्ति—समेत्यादिना। परिणमति जीर्यति। भुक्तेषु ग्रासेषु ग्रासान्प्रक्षिपतस्तस्याजीर्णं विज्ञेयम्। संवृत्ते भोजने पुनर्ग्रासमितस्याप्यन्नस्यादानं प्रहरादूर्ध्वं कुर्यादनामयमिच्छतेति आयुर्वेदविदः। स नियमो नैतेनौदरिकेन पालित इत्युपपन्नमेव सर्वम्। शोभनं महार्घ्यं प्रच्छदनमास्तरणं यस्यास्तस्यां शय्यायां। निद्रां नेति—अत्र कारणमुदरव्यथैव मुख्यतः। वातशोणितं तदाख्यो रोगविशेषः। वातरक्तनाम्नाऽऽयुर्वेदग्रन्थेषु सुप्रसिद्धः। तथा हि शार्ङ्गधरे दीपिकाटीकायां—"वातरक्तमिति—कुपितो वातः रक्तं च कुपितं वातरक्तमित्युच्यते। वातस्य प्राबल्यात् प्राधान्याच्च वातरक्तव्यपदेशः न तु रक्तवात" इति। यतः—"एकेनैव स्वहेतुवृद्धेन वातेन विमानस्थं रक्तं दूषितं एवं रक्तं स्वहेतुवृद्धं स्वमानस्थं वातदूषितं न।" चरकेऽप्युक्तम्—"वायुः प्रवृद्धो वृद्धेन रक्तेनावारितः पथि। क्रुद्धः संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्" इति। "स चाष्टधा प्रोक्त" इत्यलं विस्तृत्या। स एष महाराष्ट्रभाषायां "रक्तपिति" "महारोग" इति नाम्ना सुप्रसिद्धः। अभित इव, मामिति शेषः। पश्यामि। वातरक्ताख्यरोगस्य सर्वाण्यपि चिन्हानि स्वशरीरे मया समवलोक्यन्त इति तदाशयः। स्वकल्पनाशक्त्या सुखस्य स्वरूपं वक्ति—भोः सुखमित्यादिना। आमयेन रोगेण परिभूतं व्याप्तं। कल्यस्य निरामयस्य वर्तो वर्तनं, भोजनमिति भावः, कल्यवर्तः, निःशङ्कं कृतं भोजनं, प्रातराशो वा स न विद्यते यस्मिन् तत्। सुखं न। आमयग्रस्ता, अशङ्कितभोजनविरहिताऽवस्था सुखावस्था नेति तस्य हृदयम्। "स्त्रीरुग्रुजा चोपतापरोगव्याधिगदामयाः।" "वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात्" इति अमरः। हैमोऽपि "कल्यं प्रभाते मधुनि सज्ये दक्षे निरामये। कल्या कल्याणवाचि स्यात्" इति। विपुलेऽपि द्रव्ये यथेच्छाहारविहाराभावेन व्याधिपीडासत्त्वेन च जनाः सुखिनो नेति सर्वजनीनमेवेति

( ततः प्रविशति चेटी । )

चेटी—कहिं णु खु गदो अय्यवसन्तओ ? ( परिक्रम्यावलोक्य ) अम्मो ! एसो अय्यवसन्तओ । ( उपसृत्य ) अय्य वसन्तअ ! को कालो तुमं अण्णेसामि । [ कुत्र न खलु गत आर्यवसन्तकः ? अम्मो ! एष आर्यवसन्तकः । आर्य वसन्तक ! कः कालस्त्वामन्विष्यामि । ]

विदूषकः—( दृष्ट्वा ) किंणिमित्तं भद्दे ! मं अण्णेससि ? [ किन्निमित्तं भद्रे ! मामन्विष्यसि ? ]

चेटी—अह्माणं भट्टिणी भणादि—अवि ह्लादो जामादुओ त्ति । [ अस्माकं भट्टिनी भणति—अपि स्नातो जामातेति । ]

विदूषकः—किंणिमित्तं भोदी[2] पुच्छदि ? [ किंनिमित्तं भवती पृच्छति ? ]

चेटी—किमण्णं । सुमणावण्णअं आणेदुं[3] । [ किमन्यत् । सुमनोवर्णकमानेतुम् । ]

---

प्रवेशकानुगुणाया वसन्तकमन्विष्यन्त्याश्चेट्याः प्रवेशमाह—तत इत्यादिना ।

**कहिं णु खु इति**—वसन्तकेति विदूषकस्य, राज्ञ उदयनस्य वयस्यस्य, नाम । विदूषकस्याकस्मात्संदर्शनेनाश्चर्योद्गारः—अम्मो इति । कः कालः, अतीत इति शेषः । त्वामन्विष्यामि, विचिनोमि । तवान्वेषणे मम सुमहान्कालो व्यतीत इति भावः ।

कुक्षिपीडापीडितस्य तस्य चक्षुरन्यत्र नैवापतत्किन्तु तद्विषयकमेव तदासीदिति ज्ञायते, यतः समीपमागतामपि चेटीं स न पश्यति, प्रवृत्तायां च तस्यां संभाषणे तस्य दृष्टिगोचरं सा भवतीति दृष्ट्वेतिपदस्य सार्थक्यमवगन्तव्यम् ।

**किंणिमित्तमिति**—किंनिमित्तं, कस्माद्धेतोः ।

**अह्माणमिति**—भट्टिनी दर्शकपत्नी । भणति पृच्छति । अपीति प्रश्नार्थकः शब्दः । जामातोदयनः । जामातुः साक्षात्प्रश्नः, स च त्रिभिरिति समुदाचारविरुद्धमतस्तत्सुहृदं प्रति तं कृत्वा ताः तद्वृत्तं जानन्तीति तत्तस्या उपपन्नमेव ।

**किंणिमित्तं भोदीति**—भवती भट्टिनी । "भवति" इति ह्रस्वान्तमपि पठ्यते, दूरान्वयग्रस्तं तद्वाक्यं न स्वारस्यमावहति । तत्र, भवति ! भासमाने ! पृच्छति पूर्वानुसंधानाद्भट्टिनीत्येव ।

**किमण्णमिति**—स्नातस्य पुनरङ्गरागादिकं भोजनं वोपनेयमिति कः प्रश्नाव-

---

१ उपगम्य । २ भोदि ( भवति ) ३ आणेमीति ( आनयामीति ) ।

**विदूषकः**—ह्लादो तत्तभवं। सव्वं आणेदु भोदी वज्जिअ भोअणं [ स्नातस्तत्रभवान्। सर्वमानयतु भवती वर्जयित्वा भोजनम्।]

**चेटी**—किंणिमित्तं वारेसि भोअणं? [ किंनिमित्तं वारयसि भोजनम्?]

**विदूषकः**—अधण्णस्स मम कोइळाणं अक्खिपरिवट्टो विअ कुक्खिपरिवट्टो संवुत्तो। [ अधन्यस्य मम कोकिलानामक्षिपरिवर्त इव कुक्षिपरिवर्तः संवृत्तः।]

**चेटी**—ईदिसो एव्व होहि। [ ईदृश एव भव।]

**विदूषकः**—गच्छदु भोदी। जाव अहं वि तत्तहोदो सआसं गच्छामि। [ गच्छतु भवती। यावदहमपि तत्रभवतः सकाशं गच्छामि।]

---

काश इत्याशयगर्भितं किमन्यदिति। सुमनसः प्रसूनानि वर्णकं विलेपनञ्चेतेषां समाहारः सुमनोवर्णकम्। "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्"। "गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम्" इत्यमरः। सुमनःशब्दः स्त्रियां भूम्नि वहुलं प्रयुज्यतेऽमरदिशा। तथा च रत्नकोशोऽपि "भूम्नि स्त्रियां सुमनसः" इति। किन्तु मेदिनीनाममालाप्रतिपादितप्रकारेणैकत्वमपि दृश्यते। "सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः" ( मे० ) "पुष्पं सुमनाः कुसुमम्" ( नाम० ) इति।

**ह्लादो इति**—सुमनोवर्णकधारणादूर्ध्वं भोजनोपादानं भवेदेवेति मलोदरव्यथापीडितस्तद्वारयति—**सर्वमित्यादिना**।

**किंणिमित्तमिति**—वारयसि प्रतिषिध्यसि।

**अधण्णस्स ममेति**—अधन्यस्य दौर्भाग्यग्रस्तस्य मम कोकिलानां अक्ष्णोः परिवर्तः स्वभावादन्यथाभवनं, स्वच्छेऽपि कोकिलस्य नयने वसन्तागमे चूताङ्कुरादानेन रज्येते इति सुप्रसिद्धम्। तदानीं कोकिलस्य मदिरापानव्यसनिन इव कापि मत्तावस्था संजायते, नेत्रे रक्तिमोपेते भवतः, व्याहारश्च कलकण्ठ इति। नैषधीये च द्रष्टव्यम्—"दिने दिने त्वं तनुरेधि रेऽधिकं पुनः पुनर्मूर्च्छ च तापमृच्छ च। इतीव पान्थाञ्शपतः पिकान् द्विजान्सखेदमैक्षिष्ट स लोहितेक्षणान्॥" ( स० १ श्लो० ९० ) स इव कुक्षौ जठरे परिवर्तः, प्रक्षोभ इति यावत्, संवृत्तः। "पिचण्डकुक्षी जठरोदरं तुन्दम्" इत्यमरः। अत्र द्वयोरपि स्थलयोः परिवर्ते कारणमिष्टपदार्थभक्षणवाहुल्यमिति सूक्ष्मया दृष्ट्याऽवगन्तव्यम्।

**ईदिसो इति**—ईदृशः कुक्षिपरिवर्तमनुभवन्नेव भव। मिष्टान्नं सेव्यते यथेच्छमविचारितं भक्ष्यते च किमेतादृशेन शोकेनाधुनेति तस्या हास्यवचने गर्भितोऽपहासः।

**गच्छदु इति**—गच्छतु भवती। [illegible]

( निष्क्रान्तौ । )

प्रवेशकः ।

( ततः प्रविशति सपरिवारा पद्मावती आवन्तिकावेषधारिणी वासवदत्ता च । )

**चेटी**—किंणिमित्तं भट्टिदारिआ पमदवनं आअदा ? [ किंनिमित्तं भर्तृदारिका प्रमदवनमागता ? ]

**पद्मावती**—हळा ! ताणि दाव सेहालिआगुह्मआणि पेक्खामि कुसुमिदाणि वा ण वा त्ति । [ हला ! ते तावत् शेफालिकागुल्मकाः पश्यामि कुसुमिता वा न वेति । ]

**चेटी**—भट्टिदारिए ! ताणि कुसुमिदाणि णाम, पवाळन्तरिदेहिं विअ मोत्तिआळम्बएहिं आइदाणि कुसुमेहिं । [ भर्तृदारिके ! ते कुसुमिता नाम, प्रवालान्तरितैरिव मौक्तिकालम्बकैराचिताः कुसुमैः । ]

---

प्रवेशकस्य स्वरूपं तु द्वितीयाङ्कप्रारम्भे सविस्तरमुक्तम् । अत्र च मोदकखाद्यप्रस्तावेन पद्मावत्युदयनयोर्विवाहमङ्गलं संवृत्तमिति, अपि च समनन्तरमेव भविष्यन्नायकप्रवेशस्तत्रभवतः सकाशं गच्छामीति वाक्येन कुशलतया सूचितः ।

यत्खलूक्तमस्याङ्कस्य प्रस्तावे नायिकाया नायकविषये रतिपरिपोष आवश्यक इति तदेव घटयितुं वासवदत्तासहितायाः पद्मावत्याः प्रवेशमाह—**ततः प्रविशति** इत्यादिना ।

**किंणिमित्तमिति**—प्रमदवनप्रवेशने पद्मावत्यभिप्रायं ज्ञातुकामायास्तस्यास्तद्विषये पृच्छावचनम् ।

**हळा ताणि दावेति**—शेफालिकायाः निर्गुण्ड्या गुल्मकाः स्तम्बाः गुल्मा एव गुल्मकाः । "शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा" इत्यमरः । "गुल्मः स्तम्बे प्लीहि घट्टसैन्ययोः सैन्यरक्षणे" इति विश्वः । अमरश्च—"गुल्मा रुक्स्तम्बसेनाश्च" इति । कुसुमिताः पुष्पिताः, कुसुमानि एषां संजातानि ते कुसुमिताः "तदस्य संजातं तारकादिभ्य इतच्" ( पा० सू० ५।२।३६ ॥ ) तारकाः संजाता अस्य तारकितं नभः । हलेति चेटीं प्रति सम्बोधनं चिन्त्यम् ।

**भट्टिदारिए इति**—स्वभर्तृदारिकायाः पूर्वं स्वेन ज्ञातं यत्तत्कथयति—**ते कुसुमिता इति** । स्वस्वामिहृदयानुगुणाः सर्वथैव तदिच्छापूर्वकत्वेन व्यवहरन्तः सेवका धन्या इति साप्यत्र प्रशस्या । तानेव दृष्टान्गुल्मकान्वर्णयति—**प्रवालान्तरितैरिवेति** । प्रवालैर्विद्रुमैरन्तरितैर्मध्ये मध्ये गुम्फितैः संनिहितैर्वा, मौक्तिकानामालम्बकैर्मुक्तासरैः इव कुसुमैः आचिताः व्याप्ताः पूरिता वा । ते परिदृश्यन्ते

**पद्मावती**—हळा ! जदि एव्वं, किं दाणिं विलम्बेसि ? [ हला ! यद्येवं किमिदानीं विलम्बसे ? ]

**चेटी**—तेण हि इमस्सिं सिळावट्टए मुहुत्तअं उपविसदु भट्टिदारिआ । जाव अहं कुसुमावचअं करेमि । [ तेन ह्यस्मिन् शिलापट्टके मुहूर्तकमुपविशतु भर्तृदारिका । यावदहं कुसुमावचयं करोमि । ]

**पद्मावती**—अय्ये ! किं एत्थ उपविसामो ? [ आर्ये ! किमत्रोपविशावः ? ]

**वासवदत्ता**—एव्वं होदु । [ एवं भवतु । ]

( उभे उपविशतः । )

**चेटी**—( तथा कृत्वा ) पेक्खदु पेक्खदु भट्टिदारिआ अद्धमणसिळावट्टएहिं विअ सेहालिआकुसुमेहिं पूरिअं मे अञ्जलिं । [ पश्यतु पश्यतु भर्तृदारिका अर्धमनःशिलापट्टकैरिव शेफालिकाकुसुमैः पूरितं मेऽञ्जलिम् । ]

---

इति शेषः । एतेन ज्ञायते यन्निर्गुण्डीकुसुमानि रक्तिमसंभिन्नधवलवर्णानीति । आचिता इत्यनेन कुसुमानां बाहुल्यमुक्तम् ।

**हळेति**—इदानीं, पुष्पितेषु शेफालिकागुल्मकेषु तदेतस्मिन्नवसर इति । किं कस्माद्धेतोर्विलम्बसे वृथा कालापनयनं करोषि । विलम्बश्च सद्यःस्फुटितकुसुमापचयाकरणेनेति विज्ञेयम् । शीघ्रमेव तानि मदर्थमादायागच्छेति तदाशयः ।

**तेण हीति**—तेन हि, यद्येवं मनोरथो यन्मयैवावचेयानि कुसुमानि तदा पट्ट एव पट्टकः । "पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयोः" इत्यमरः । शिलामयः पट्टकस्तस्मिन् । त एते उपवनविभागे उपवेशनार्थं तत्र तत्र निर्मीयन्ते । मुहूर्तं उपविशतु, "कालाध्वनोरत्यन्तसंयोगे । ( पा० सू० २।३।५।। ) इह द्वितीया स्यात् । मासमधीते ।" इति द्वितीया ज्ञेया । व्यक्तमनोरथानुगुणमेव व्यवहर्तुमिच्छन्त्याह—**यावदिति** । अवचयश्च वृन्तेभ्यः कुसुमानामादानम् ।

**अय्ये इति**—उपवेष्टुमिच्छन्ती वासवदत्तासम्मतिं पृच्छति—किमत्रेति । अथवा तत्रैव गच्छावः, यत्र कुसुमिताः शेफालिकागुल्मका इत्यपि पूरणीयम् । उपवेष्टुं कामयमानां तां विज्ञाय तद्धृदयानुगुणमाह—**एव्वं होदु इति** ।

तथा कृत्वा, पुष्पावचयनं नाटयित्वेति । पुष्पाणां बाहुल्यं प्रशंसन्त्याह—पेक्खदु इति । पश्यतु पश्यत्विति द्विर्वचनं पुष्पप्रशंसापरत्वात्तथा अतितरां शोभते एव ।

पद्मावती—( दृष्ट्वा ) अहो विइत्तदा कुसुमाणं ! पेक्खदु पेक्खदु अय्या । [ अहो विचित्रता कुसुमानाम् ! पश्यतु पश्यत्वार्या । ]

वासवदत्ता—अहो दस्सणीअदा कुसुमाणं ! [ अहो दर्शनीयता कुसुमानाम् ! ]

चेटी—भट्टिदारिए ! किं भूयो अवइणुस्सं ? [ भर्तृदारिके ! किं भूयोऽवचेष्यामि ? ]

पद्मावती—हळा ! मा मा भूयो अवइणिअ । [ हला ! मा मा भूयोऽवचित्य । ]

वासवदत्ता—हळा ! किंणिमित्तं वारेसि ? [ हला ! किंनिमित्तं वारयसि ? ]

---

अर्धं अर्धभागो मनःशिला नागजिह्विकाख्यो रक्तवर्णो धातुविशेषस्तत्पट्टाः, खण्डा इति यावत्, येषां तैः । श्वेतपुष्पाणां तेषां क्वचित्क्वचिदरुणवर्णत्वेन मनःशिलाखण्डमिश्रणं संभाव्यते । इव शब्दश्चोत्प्रेक्षावाचकः । तथा चोक्तम्—"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः" इति । "मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका । नैपाली कुनटी गोला" इत्यमरः ।

**अहो विइत्तदा इति**—श्वेतकुसुमेषु रक्तिमच्छटानामाकर्षणीयतया संभिन्नत्वात्तथाभूत आश्चर्योद्गारः । तदुक्तेऽर्थे स्वस्यापि संमतिं तत्प्रेरिता वासवदत्ताऽऽह—अहो इत्यादिना । दर्शनीयता अभिलषणीयसौन्दर्यवत्त्वम् । एतादृशानि नयनयोः समधिकां प्रीतिं समुत्पादयन्ति पुष्पाणि वीक्ष्य सफलीभूतमस्माकं प्रमदवनाभिगमनमिति भावः ।

**भट्टिदारिए इति**—भर्तृदारिकया वासवदत्तया च कृतां तादृशीं पुष्पस्तुतिं प्रेक्ष्य संतुष्टे भवेयातां वा ते तावतैवेति शङ्काव्यापृतान्ता तथा पृच्छति ।

**हळा मा मेति**—यद्यप्यत्र मेत्यस्य प्रतिषेधार्थकत्वं तथापि "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" ( पा० सू० ३।४।१८ ) इति सूत्रे "अलंखल्वोः किम् । मा कार्षीत् ।" इत्यादिना केवलं अलंखल्वोरेव ग्रहणं संभवति । एवं चार्षः प्रयोगोऽयमित्युच्येत चेन्महाकवीनामप्येतादृशाः प्रयोगाः समुपलभ्यन्ते । तथाहि शाकुंतले—"हृदय ! मा उत्ताम्य" इति । मावचित्य, अलमनेनैतावतैव पुष्पादानेनेति ।

**हळा किंणिमित्तमिति**—किंनिमित्तं वारयसि, वारणे हेतुरुच्यतामिति भावः । यदि रोचन्ते त इमानि पुष्पाणि तदा तदादानप्रतिषेधे बीजं किमिति प्रश्नस्याशयो विज्ञेयः ।

**पद्मावती**—जंदि[1] अय्यउत्तो इह दाव[2] आअच्छिअ इमं कुसुमसमिद्धिं पेक्खेदुं[3], सम्माणिदा भवेअं। [यद्यार्यपुत्र इह तावदागत्येमां कुसुमसमृद्धिं प्रेक्षेत, सम्मानिता भवेयम्।]

**वासवदत्ता**—हळा! पिओ दे भत्ता? [हला! प्रियस्ते भर्ता?]

**पद्मावती**—अय्ये! ण जाणामि, अय्यउत्तेण विरहिदा उक्कण्ठिदा होमि। [आर्ये! न जानामि, आर्यपुत्रेण विरहितोत्कण्ठिता भवामि।]

**वासवदत्ता**—(आत्मगतम्) दुक्खरं खु अहं करेमि। इअं वि णाम एव्वं मन्तेदि! [दुष्करं खल्वहं करोमि। इयमपि नामैवं मन्त्रयते!]

---

**जदीति**—आर्यपुत्र उदयनः। कुसुमाणां शेफालिकापुष्पाणां समृद्धिं लक्ष्मीं। यदि प्रेक्षेत, "जातुयदोर्लिङ्॥ (पा॰ सू॰ ३।३।१४७॥) यदाययोरुपसंख्यानम्। (वार्तिकम्) लृटोऽपवादः।" इति भविष्यत्यर्थे लिङ्। तदेत्यध्याहार्यं यदिशब्दसंप्रयोगात्। संमानिता भवेयम्, एतान् पुष्पभराढ्यान् शेफालिकागुल्मकान्वीक्ष्य "रसिका मे भार्या पद्मावती या उद्याने एतादृशान्पुष्पवृक्षानारोप्यापि मसृणान्तःकरणवत्त्वेन वृन्तेभ्यः पुष्पाण्यपि नाददाति" इत्यादिरीत्या तेन प्रशंसिता भूयासमिति। "प्रेक्ष्य" इति पाठे तु "आर्यपुत्रः" इतिस्थले "आर्यपुत्रेण" इति, अथवा "संमानितां कुर्यात्" इति किमपि कार्यं भवेदन्यथा "समानकर्तृकयोः पूर्वकाले" (पा॰ सू॰ ३।४।२१॥) समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। स्नात्वा भुक्त्वा पीत्वा व्रजति।" इतिदर्शितरीत्या "प्रेक्ष्य संमानिता भवेयम्" इत्यत्रैककर्तृकत्वाभावात् दोष आपद्येत।

**हळेति**—सर्वतरुणरमणीसाधारणोऽयं प्रश्नः। स चाचिरोढकन्यकामुद्दिश्य प्रायः संगताभिः सर्वाभिरेव क्रियते।

**अय्ये इति**—पूर्वं हला इति, अधुना "आर्ये" इत्यामन्त्रणं अस्वरसवहम्। न जानामीति लज्जाप्रधानस्य कुलयुवतिजनस्य सदृशमेव। तस्यार्थस्य साक्षात्प्रतिपादनं धार्ष्ट्यं प्रकटयेदिति कृत्वा भङ्ग्याऽऽह—आर्यपुत्रेणेति। विरहेणोत्कण्ठा या समनुभूयते सा प्रियस्यैव जनस्य तेनेति हृदयम्।

**दुक्खरमिति**—दुष्करं करोमि, महत्कष्टं सञ्जातमिति तदर्थिका वचनभङ्गिः। इयमपि, पद्मावत्यपि। अप्राप्ताचिरसहवासा न पुनर्मम इवान्यथेत्यपेरर्थः। एवं, प्रियो मे भर्तेति, मन्त्रयते कथयति।

---

१ नास्ति। २ नास्ति। ३ पेक्खिअ (प्रेक्ष्य)।

चेटी—अभिजादं खु भट्टिदारिआए मन्तिदं 'पिओ मे भत्ता' त्ति । [ अभिजातं खलु भर्तृदारिकया मन्त्रितं 'प्रियो मे भर्ता' इति । ]

पद्मावती—एक्को[1] खु मे सन्देहः । [ एकः खलु मे सन्देहः । ]

वासवदत्ता—किं किं ? [ किं किम् ? ]

पद्मावती—जह मम अय्यउत्तो, तह एव्व अय्याए वासवदत्ताए त्ति । [ यथा ममार्यपुत्रः, तथैवार्याया वासवदत्ताया इति । ]

वासवदत्ता—अदो वि अहिअं । [ अतोऽप्यधिकम् । ]

पद्मावती—कहं तुवं जाणासि ? [ कथं त्वं जानासि ? ]

वासवदत्ता—( आत्मगतम् ) हं, अय्यउत्तपक्खवादेण[2] अदिक्कन्दो समुदाआरो[3] । एव्वं दाव भणिस्सं । ( प्रकाशम् ) जइ

---

अभिजादमिति—अभिजातं कुलजनानुरूपम् । तत्समुदाचार( मचिरोक्त )-मनुल्लंघ्यैव तदर्थप्रतिपादकेन वाक्येन कुशलतयोक्तम् । "आर्यपुत्रेण विरहिते—" त्यादिपद्मावतीवाक्ये यत्खलु व्यङ्ग्यं तदेव स्पष्टं निर्दिशन्त्याह—**प्रिय इत्यादि ।**

**एक्को इति**—स्वभर्तुः स्वस्मिन्विद्यमानायां प्रीतौ निःसंदिग्धापि सा तत्र सर्वथैव नैवेत्याशङ्कमाना वासवदत्ताविषयिण्याः प्रीतेः प्रमाणमावन्तिकया ज्ञातं चेच्छ्रोतव्यमिति मनसि कृत्वा तथाऽऽह ।

**किं किमिति**—किं किमिति हेतुपृच्छायां सामान्यं वचनम् । कोऽसौ ते संदेह इति यावत् ।

**जह ममेत्ति**—यथेति, यावता परिमाणेन, प्रिय इति शेषः प्रकरणवशाज्ज्ञेयः । एवमेवोत्तरार्धेऽपि । तथैव तावतैव परिमाणेन स वासवदत्तायाः प्रिय उत ततोऽन्यथेति उत्तरार्धे काक्वा प्रश्नो विज्ञेयः ।

**अदो वि इति**—अतोऽपि, त्वत्तोऽप्यधिकं । प्रिय इत्यायात्येव ।

आवन्तिकाया निश्चितज्ञानेन विभ्रान्ता सहसैव पृच्छति—**कहं तुवमिति ।** कथमिति, कथं ते इदं विशिष्य ज्ञानं सम्पन्नम् । स प्रकार उच्यतामिति भावः । किं त्वया साक्षात्कृतं, उतान्येन केनापि तथा कथितं श्रुतं, अथवा लिङ्गेन केनाप्यनुमितमिति सर्वं कथयेति ।

**हमिति**—आर्यपुत्रे उदयने यः पक्षपातः स्नेहस्तेन हेतुना । समुदाचारो मर्यादा । अद्ययावत् महता कष्टेन परिपालिता मर्यादा ( रहस्यभेदो मा भूयादिति

---

१ एत्तओ ( एतावान् ) । २ °सिणेहेण ( स्नेहेन ) । ३ होदु ( भवतु ) ।

अप्पो सिणेहो सा सजणं ण परित्तजदि । [ हम्, आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः । एवं तावद्भणिष्यामि । यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति । ]

**पद्मावती**—होदव्वं । [ भवितव्यम् । ]

**चेटी**—भट्टिदारिए ! साहु भट्टारं भणाहि—अहं पि वीणं सिक्खिसामि त्ति । [ भर्तृदारिके ! साधु भर्तारं भण—अहमपि वीणां शिक्षिष्य इति । ]

**पद्मावती**—उत्तो मए अय्यउत्तो । [ उक्तो मयार्यपुत्रः । ]

**वासवदत्ता**—तदो किं भणिदं ? [ ततः किं भणितम् ? ]

---

कृत्वाऽङ्गीकृतो व्यवहारः ) साधुनोल्लङ्घिता मयेति तस्या विषादः । उक्तेऽर्थे उपायं विचिन्त्याऽऽह—एवमिति । यदि अल्पः स्नेहः, भर्तरीति शेषः । सा वासवदत्ता स्वजनं मातपितरौ वान्धवांश्च न परित्यजति, न पर्यत्यक्ष्यदित्यर्थः । यस्मात्तान्परित्यज्य सा उदयनमन्वगच्छत्तस्मात्तस्मिन्ननल्पस्तस्याः स्नेह इत्यर्थादेवापद्यते । वासवदत्ताकृतस्वजनपरित्यागान्यथानुपपत्त्योदयनः तस्या अधिकं प्रिय आसीदिति कल्प्यते । उदयनस्य कारागृहवासः, तेन सह च वासवदत्ताया विवाहः, स्वजनस्य परित्यागः, तेन सह पलायनं चेति प्रतिज्ञानाटिकायां सुस्पष्टः सन्दर्भः ।

**होदव्वमिति**—भवितव्यं यदुदयनो वासवदत्ताया अधिकं प्रिय इति शेषः । यत्त्वया तर्कितं तदुपपद्यत एवेति तस्या आशयो विज्ञेयः । अथवा भवितव्यमित्यनादरेऽपि । स चारुच्यमानवस्तुविवेचनमसहमानायास्तस्याः स्त्रीस्वाभाव्याद्युक्त एव ।

**भट्टिदारिए इति**—अहमपि वीणां शिक्षिष्ये, यथा वासवदत्ताया वीणावादनशिक्षायां सुमहानादर आसीत्तथैव ममापीति तादृशवासवदत्तासंग्राहकोऽपिशब्दः । वीणावादनपटोर्गुरोरुदयनात्तां विद्यां लब्ध्वा तया यथा तावान् तत्स्नेहः सम्पादितस्तथैव त्वयाऽपि कर्तव्यम् । एवं च त्वामप्यतथाभूतां निपुणामवगम्य कदाचित्तस्या अप्यधिकं त्वयि स्निह्येदिति तद्हृदयम् ।

**उत्तो मए इति**—उक्तो मया, विज्ञप्तो मया, तस्मिन्नर्थ इति शेषः प्रकरणवशाज्ज्ञेयः ।

**तदो किमिति**—ततो विज्ञप्त्यनन्तरं, किं भणितमुक्तं, तेनेति शेषः । अङ्गीकृता ते विज्ञप्तिरुत नेति परिज्ञातुमिच्छामीति तदाशयः । द्वितीयोद्वाहप्रसङ्गेनापि स्वहृदयादनपास्तामप्युदयनेन स्वात्मानमतथाभूतामिव मन्यमानायास्तत्स्नेहश्रवणकातरायाश्च तस्या युज्यते हि तादृशः प्रश्नः ।

---

१ गुज्जइ ( युज्यते )

पद्मावती—अभणिअ किञ्चि दिग्घं णिस्ससिअ तूह्णीओ संवुत्तो। [ अभणित्वा किञ्चिद्दीर्घं निःश्वस्य तूष्णीकः संवृत्तः । ]

वासवदत्ता—तदो तुवं किं विअ तक्केसि ? [ ततस्त्वं किमिव तर्कयसि ? ]

पद्मावती—तक्केमि अय्याए वासवदत्ताए गुणाणि सुमरिअ दक्खिणदाए मम अग्गदो ण रोदिदि त्ति । [ तर्कयाम्यार्याया वासवदत्ताया गुणान् स्मृत्वा दक्षिणतया ममाग्रतो न रोदितीति। ]

वासवदत्ता—( आत्मगतम् ) धण्णा खु ह्मि, जदि एव्वं सच्चं भवे । [ धन्या खल्वस्मि, यद्येवं सत्यं भवेत् । ]

---

अभणिअ किञ्चि इति—अभणित्वा किञ्चित्, अध्यापयामि नाध्यापयामीति किमप्यनुक्त्वेति । दीर्घेन निःश्वसितेन तूष्णींभवनेन च ज्ञायते यद्वासवदत्तागतं वीणावादनपटुत्वं तत्रविषये च तस्याः शीघ्रविद्याग्राहित्वं स्मृत्वा पर्याकुलो राजा इति ।

तदो तुवमिति—ततस्तस्मात्, हेतोरिति यावत् । पद्मावतीवचनमेव हेतुस्थाने निधाय तद्विषये तत्तर्कं पृच्छति किमिवेत्यादिना । तत इत्यनेन यत इत्यस्योपादानम् । तेन च, यतः ( येन हेतुना ) स दीर्घं निःश्वस्य तूष्णीकः संवृत्तस्ततः ( तेन हेतुना ) किं त्वयानुमीयते तदुच्यतामिति तदाशयः ।

तक्केमीति—तर्कयामि, उक्तहेतुनायं मे तर्कः संपन्न इति यावत् । कृतस्यानुमानस्य स्वरूपमिदं विज्ञेयं—"आर्यपुत्रो वासवदत्तागुणान् स्मरति, यतश्च स तथा प्रार्थितोऽपि तूष्णीकः संवृत्तो दीर्घं निःश्वसितवांश्च, कृते प्रश्नेऽनुक्त्वा यो दीर्घं निःश्वसिति तूष्णीकश्च भवति स किमपि भूतपूर्वं स्मरतीति भूयोदर्शनात्, तथा चायं, तस्मात्तथा" इति । न रोदिति, तत्र कारणमाह—**दक्षिणतयेति ।** मद्धृदयव्यथामाशङ्कमानोऽसौ ऋज्वाशयो रुदितव्येऽपि न रोदिति । मम, वासवदत्तायाः सपत्न्या इति ध्वनिः ।

धण्णेति—यद्येवं, दीर्घनिःश्वसनस्य तूष्णींभवनस्य चेदमेव ( त्वत्कृतस्तर्क एव ) कारणं सत्यं भवेत्तदा धन्यास्मि, सफलीभूतं मे जन्मेति तदाशयः । "न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान् रागो विवर्धते" "इति प्रतिपादितदिशाऽग्रिमवक्ष्यमाणसंभोगपरिपोषाय कार्यवशाद्भिन्नदेशित्वप्रधानः प्रवासात्मको विप्रलम्भः सामग्र्यरीत्या प्रदर्शितः । अधुना च नाट्यवस्तु यथा क्रमेणोन्नतिं प्रापितं तथैव क्रमेण संहरणीयमिति कृत्वा विप्रलम्भकालस्थां भिन्नदेशित्वावस्थामपि विदूरीकुर्वन् कुशलतयोभयोरपि नायिकयोस्तादृश-

---

१ दक्खिण्णदाए ( दाक्षिण्यतया ) ।

( ततः प्रविशति राजा विदूषकश्च । )

**विदूषकः**—ही ही ! पचिअ[1]पडिअबन्धुजीवकुसुमविरळवा[2]दर-मणिज्जं पमदवणं । इदो दाव भवं । [ ही ही ! प्रचितपतितबन्धु-जीवकुसुमविरलपातरमणीयं प्रमदवनम् । इतस्तावद्भवान् । ]

**राजा**—वयस्य ! वसन्तक ! अयमागच्छामि ।

कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः ।
तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ॥ १ ॥

---

संभोगपरिपुष्ट्यै नायकस्य वयस्येन साकं प्रमदवन एव प्रवेशं वक्ति—**तत इत्यादिना ।**

**ही हीति**—ही हीति हर्षे । स च बन्धूककुसुमाच्छादितामापादितशोभां प्रमदवनभूमिं वीक्ष्येति ज्ञेयम् । प्रचितान्यगणितानि यानि बन्धुजीवकुसुमानि रक्तकापरनामधेयानि तेषां विरलेन सावकाशेन पातेन पतनेन रमणीयमाल्हाद-दायि । "रक्तकस्तु बन्धूको बन्धुजीवकः" इत्यमरः । शरदि बन्धूकाः पुष्यन्तीति प्रसिद्धिः । तथा च ऋतुसंहारे शरद्वर्णनप्रस्तावे—"बन्धूकपुष्परचितारुणता च भूमिः" इति । इतस्तावदिति तमुक्तं प्रदेशमुद्दिश्यागमनाय निवेदनम् ।

मित्रप्रेम्णा परवशो नृपस्तमेव प्रदेशमुद्दिश्य प्रचलन्नाह—**अयमागच्छामीति** । तं चोद्देशं विस्रम्भकथाः प्रवर्तयितुं योग्यं विज्ञाय तदानींतनीं स्वस्थितिं निर्वर्णयति—**कामेनेति**—कामेन कंदर्पेण, पातिता इत्यत्रान्वयः । तदा, तस्मिन्काले यदा च प्रद्योतः स्वमन्त्रिभिः संमन्त्र्य कपटेन मां स्वपरतन्त्रं चकार । इदं च प्रतिज्ञानाटिकायां सुस्पष्टं । तद्यथा—"रूपयौवनकुलविद्यादिगुणगणोपशोभित-मुदयनं ज्ञात्वा तेनाकृष्टचेताः प्रद्योतोऽवन्तीश्वरः स्वदारिकाया वासवदत्ताया भर्तारं तं कर्तुमिच्छन् सुलभेन मार्गेण तं वशं विधातुं नाशक्नुवानः कस्मिंश्चित्समये मृगयासक्तं तं कृत्रिमहस्तिविलोभनेन निगृह्य शुद्धान्ते च निभृतं स्थापयित्वा वासवदत्ताया वीणाध्यापनकार्ये न्ययोजयत् । तत्र विषये च वासवदत्ताया नैपुण्य-मवलोक्य परमं सन्तुष्ट उदयनो रहःप्रणये तस्यै स्वात्मानं समर्पयत्" इति । उज्जयिनीगते मयि, तत्र निवसति मयि । अवन्तिराज्ञः प्रद्योतस्य तनयां वासवदत्तां । स्वैरं यथेच्छं दृष्ट्वा, वीणावादनाध्यापनकार्यसमये तस्य दृष्टिस्तां पपावित्युपपद्यत एव । ज्ञायते चानेन वासवदत्ताया अलौकिकं सौन्दर्यमासीद्येन

---

१ णववित्थडिअ० ( नवविस्तीर्ण० ) । २ संपाद० ( संपात० ) ।

**विदूषकः**—कहिं णु खु गदा तत्तहोदी पदुमावदी ? ळदामण्डवं गदा भवे, उदाहो असणकुसुमसञ्चिदं वग्घचम्मावगुण्ठिदं विअ पव्वदतिळअं णाम सिळापट्टअं गदा भवे, आदु अधिअकडुअ-गन्धसत्तच्छदवणं पविट्ठा भवे, अहव अळिहिदमिअपक्खिसङ्कुळं

---

तदवस्थोऽप्युदयनो मोहितः । कामप्यनिर्वर्णनीयामवस्थां दशां गते प्राप्ते च मयि । पञ्च इषवो बाणाः पातिताः । पञ्चभिर्बाणैर्मा विद्धमकरोदिति । मन्मथो यदा पुष्पमयैः शरैर्यं कञ्चिद् विध्यति तदा तस्यान्तःकरणे प्रेमभाव उत्पद्यत इति संस्कृतकाव्ये तत्र तत्रोल्लिख्यते । एवञ्च 'पुष्पधन्वा, कुसुमेषुः, पञ्चशरः' इति नामान्यपि तस्य संकेतितान्युपपद्यन्ते । तस्य पञ्चबाणानां निर्वचनमिदं द्रष्टव्यम्—"अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः" इति । तैर्बाणैरद्यापि पद्मावतीस्वीकारेणापि, हृदयं सशल्यं शल्येन कीलकेन सहितमेव । यद्यपि पद्मावती परिणीता मया तथापि मृतापि वासवदत्ता तथास्नेहा-धिक्यान्मे हृदयान्नापयातीति भावः । एवञ्च यन्मामुद्दिश्य पञ्चबाणान्व्ययीकृत्यापि पुनरपि स पीडयितुमारभते तत्पञ्चेषोस्तस्य कथमुपपद्यत इत्याशङ्कमान आह—पञ्चेषुर्मदन इत्यादि । भूयश्च पुनः पद्मावतीसाहचर्येण तामेवोद्दिश्य । वय-मित्यहमर्थकम् । विद्धास्ताडिताः । यदा यस्मात्कारणान्मदनः पञ्च इषवो यस्य तादृग्भवति, ते च तेन मयि पूर्वं व्ययीकृताः, तदाऽयं षष्ठः शरस्तेन कथं पातित इत्या-शङ्का, षष्ठस्य बाणस्याप्रसिद्धत्वात् । षष्ठः शर इत्यनेनोपरतायामपि वासवदत्तायां भृशमनुरक्तस्य तस्य पद्मावतीमुद्दिश्य रागोदयो ध्वन्यते । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तूक्तपूर्वमेव ॥ १ ॥

**कहिं णु खु इति**—क नु खल्वित्यादिना ज्ञायत इदं यत्प्रासादे पद्मावती-मन्विष्य तां तत्र न दृष्ट्वा कदाचित्प्रमदवनं प्रविष्टा भवेदिति मत्वा तदर्थमेव तयोः प्रवेश इति । लतामण्डपमित्यारभ्य दारुपर्वतकं गता भवेदित्यन्तं तावत्तस्य पद्माव-त्यसंदर्शनविषयिण्याशङ्का ज्ञेया । लताप्रचुरो मण्डपस्तम् । असनकुसुमैः जीवक-पुष्पैः सञ्चितमाच्छादितं शिलापट्टकं । पर्वततिलकमिति शिलापट्टकस्य नामधेयम् । जीवकपुष्पाच्छादितत्वेन व्याघ्रस्य चर्मणावगुण्ठितं वेष्टितमिवेत्युत्प्रेक्षितम् । शिलाप-ट्टकश्च कृष्णवर्णः जीवकपुष्पाणि च पीतवर्णानीति पुष्पावकाशे कृष्णवर्णपट्टकसंभा-वनया तथेति ज्ञेयम् । अतिकटुको गन्धो येषां ते, तथाभूतास्ते सप्तच्छदाः सप्तपर्णाख्यवृक्षास्तेषां वनम् । "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः । शरदि पुष्प्यन्ति ते, गन्धश्च तेषां मत्तहस्तिनो दानगन्ध इवेति प्रसिद्धिः । सङ्ग्रहश्च शरदृतुस्वभाववर्णने स्तुतिकुसुमाञ्जलौ—"चेतः कर्षन्ति सप्तच्छदकुसुमरसासारसौरभ्यलुभ्यत्" "मेघान्ते वान्ति सप्तच्छदकुसुमरजोवाहिनो गन्धवाहाः" । ऋतुसंहारे च "सप्तच्छदैः कुसुमभारनतैर्वनान्ताः" इति । तच्चानुपदमेव ज्ञायते विदूषकवचनेन यत्स शरत्काल आसीदिति "शरत्कालनिर्मले" इत्यादिना ।

दारुपव्वदअं गदा भवे । (ऊर्ध्वमवलोक्य) ही ही ! सरअकाळणिम्मळे अन्तरिक्खे पसादिअबळदेवबाहुदंसणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं पेक्खदु दाव भवं । [ कुत्र नु खलु गता तत्रभवती पद्मावती ? लतामण्डपं गता भवेत्, उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितमिव पर्वततिलकं नाम शिलापट्टकं गता भवेत्, अथवा अधिककटुकगन्धसप्तच्छदवनं प्रविष्टा भवेत्, अथवा आलिखितमृगपक्षिसङ्कुलं दारुपर्वतकं गता भवेत् । ही ही ! शरत्कालनिर्मलेऽन्तरिक्षे प्रसाधितबलदेवबाहुदर्शनीयां सारसपङ्क्तिं यावत्समाहितं गच्छन्तीं पश्यतु तावद्भवान् । ]

राजा—वयस्य ! पश्याम्येनाम्,—

---

आलिखिताः, चित्रे लिखिता इति यावत्, ये मृगाः पक्षिणश्च तैः सङ्कुलं व्याप्तम् । दारुपर्वतकं, दारुणः काष्ठस्य अल्पो ह्रस्वो वा पर्वतः पर्वतकः "अल्पे" (पा० सू० ५।३।८५) "ह्रस्वे" । (पा० सू० ५।३।८६) इति वा कन् ।

दर्शनीयं दृष्टमिति कृत्वा प्रमोदेन तस्योद्गारो ही हीति । प्रस्तुतं विहायान्यविषये प्रवर्तनं तस्योपशोभत एव । अन्तरिक्षस्याकाशस्य निर्मलत्वे वलाहकवियुक्तत्वे शरत्कालः प्रयोजकः । तस्मिन् ऋतौ आशाश्च स्वच्छाः, नद्यः कृशा अच्छतोयाः, आकाशं चातिनिर्मलं रात्रौ सुस्पष्टचन्द्रतारकं च तत्, बलाकाः सारसपक्षिणश्चालोभनीयां पक्तिं विरच्य नभसि विचरन्तीति सर्वथैव रमणीयः समयस्तत्र तत्रादरेण प्रशस्यते । तथा च मुद्राराक्षसे "राजा—( नाट्येनारुह्य दिशोऽवलोक्य ) अहो ! शरत्समयसंभृतशोभानां दिशामतिरमणीयता । कुतः—शनैः श्यानीभूताः सितजलधरच्छेदपुलिनाः, समन्तादाकीर्णाः कलविरुतिभिः सारसकुलैः । चिताश्चित्राकारैर्निशि विकचनक्षत्रकुमुदैः, नभस्तः स्यन्दन्ते सरित इव दीर्घा दशदिशः ॥" इति । एवञ्च तादृशे निर्मलेऽन्तरिक्षे प्रसाधितश्चन्दनविलेपनादिना शोभाधिक्यं लम्भितो यो बलदेवस्य कृष्णाग्रजस्य बाहुः स इव दर्शनीया ताम् । सारसानां तदाख्यपक्षिविशेषाणां पङ्क्तिं श्रेणीम् । समाहितं, रचनाया भङ्गं न कृत्वेति यावत्, यथा स्यात्तथा गच्छन्तीम् । श्रेणीं विरच्य सावधानतया प्रसरन्ति ते पक्षिण इति तेषां स्वभावोक्तिः । सारसश्रेण्या दीर्घत्वमीषत्ताम्रवत्त्वं च गृहीत्वा कृष्णाग्रजस्य बाहोः सादृश्यमिति विज्ञेयम् । शरदि सारसा आकाशमार्गेण मुदा गच्छन्ति । ऋतुसंहारे द्रष्टव्यम्—"हंसैः सारसकुलैः प्रतिनादितानि सीमान्तराणि जनयन्ति नृणां प्रमोदम्" इति ।

वयस्येति—पश्यामि एनां, सारसपङ्क्तिमित्यनुवर्तते । मयापि सा दृग्भ्यां पीयत एव दर्शनीयत्वादिति । तमेव च विशिष्य वर्णयति—

ऋज्वायतां च विरलां च नतोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु ।
निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवाम्बरतलस्य विभज्यमानाम् ॥ २ ॥

चेटी—पेक्खदु पेक्खदु भट्टिदारिआ एदं कोकणदमालापण्डर-रमणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं । अम्मो भट्टा! [ पश्यतु पश्यतु भर्तृदारिका एतां कोकनदमालापाण्डुररमणीयां सारसपङ्क्तिं यावत्समाहितं गच्छन्तीम् । अम्मो भर्ता ! ]

**ऋज्वायतामिति**—ऋज्वायतां सरलदीर्घां च, विरलां सावकाशां च, नतोन्नतां नता चोन्नता च तां, अनेन क्षणादेव सा पङ्क्तिर्भिन्नरचनोपशोभिताभवदिति ज्ञायते, ऋज्वायतत्वञ्चार्थादेव विनष्टमिति विज्ञेयम् । गतावेकत्र बद्धमानसानां तेषां श्रेणी कस्मिंश्चित्समये समाहिता वर्तते क्रमेण च गतिभिन्नतयाऽन्यथा संपद्यते पुनश्च पूर्ववदिति स्वभावो द्रष्टव्यः । निवर्तनेषु, एकस्मादाकाशविभागादन्यं विभागं प्रति विवलनेषु, सप्तर्षीणां वंशः समूहस्तदाख्यतारकागणः स इव कुटिला ताम् । याश्च तारकाः सप्तर्षितारका इति प्रसिद्धास्ताः सरलरेखायां न परिदृश्यन्ते, तासां व्यवस्था च कुटिलेति । तेषां सप्तर्षीणां च निर्वचनमिदं ज्ञातव्यम्—"मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः" ॥ इति । अनेन चापर एव तेषां रचनाप्रकारो वर्णितः । निर्मुच्यमानः, कञ्चुकेनेति यावत्, यो भुजगः सर्पस्तस्योदरमिव निर्मलं स्वच्छं तस्य । कञ्चुकाद्बहिर्निःसरतः सर्पस्योदरमच्छाच्छमेव भवतीति सुप्रसिद्धम् । अम्बरतलस्य विभज्यमानां द्वौ विभागौ कुर्वन्तीं सीमामिव मर्यादालेखामिवेत्युत्प्रेक्षा । यथैकमेव क्षेत्रं प्रस्तररे-खया द्विधा विभज्यते तथैवाकाशतलमनया श्रेण्या विभज्यत इवेति संभावनाप्रयुक्तं वचनम् । अत्र विभज्यमानामिति स्थले विभजन्तीमिति पदमभविष्यत्तदा समीची-नमिति ज्ञेयम् । सीमा तु विभजत्यपरं न तु विभज्यते सा स्वयं केनापीति हृदयम् । पूर्वार्धे स्वभावोक्तिरुत्तरार्धे चोत्प्रेक्षा ज्ञेया । "स्वभावोक्तिर्दुरूहार्थस्वक्रिया-रूपवर्णनम्" इति स्वभावोक्तिलक्षणम् ( सा० द० ) । "भवेत्संभावनोत्प्रेक्षा प्रकृतस्य परात्मना" इत्युत्प्रेक्षायाश्च तत् ( सा० द० ) । वृत्तं च वसन्ततिलका ॥२॥

शिलापट्टके उपविष्टां पद्मावतीमुद्दिश्य तामेव सारसपङ्क्तिं दृष्ट्वा चेट्या उक्तिः—

**पेक्खदु इति**—कोकनदानां रक्तिमच्छटासंभिन्नकमलानां माला स्रक् । यद्यपि "अथ रक्तसरोरुहे । रक्तोत्पलं कोकनदं" इत्यमरप्रतिपादितदिशा कोकन-दशब्दो रक्तोत्पलवाचकस्तथापि सूक्ष्मया दृष्ट्याऽवलोकिते न स सर्वथैव तथा किन्तु "अथ कोकनदं रक्तकुमुदे रक्तपङ्कजे" इति मेदिन्युक्तदिशा रक्तच्छटायुक्तं

१ एसा···रमणिज्जसारसपन्ती···समाहिदा गच्छदि ।

**पद्मावती**—हं[1] अय्यउत्तो ! अय्ये ! तव कारणादो अय्यउत्तदंसणं परिहरामि । ता इमं दाव माहवीळदामण्डवं पविसामो । [ हम्, आर्यपुत्रः ! आर्ये ! तव कारणादार्यपुत्रदर्शनं परिहरामि । तदिमं माधवीलतामण्डपं प्रविशामः । ]

पङ्कजं द्योतयति । यदि केवलं रक्तमेव कमलमभीष्टं तदा 'रक्तकुमुदे' 'रक्तपङ्कजे' इति द्विरुक्त्या किं लभ्यते । अपि च "सिते कुमुदकैरवे" इत्यनेन कुमुदं सितं कमलमेव तत्र रक्तत्वमिष्यते इति तदर्थः । अन्यथा 'रक्तपङ्कजे' इत्यनेनैव निर्वाहोऽभविष्यत् । पङ्कजशब्दः सामान्यकमलवाची, कुमुदशब्दश्च सितविशेष इति तयोर्विशेषो न विस्मर्तव्यः । एवं च सुलभेऽर्थे कोकनदशब्दः स्वार्थेऽसंभवन् श्वेतकमलं लक्षणया द्योतयतीत्यादि निरर्थकम् । प्रायः सर्वेऽपि विवरणकारा अत्र गड्डलिकाप्रवाहन्यायेन विभ्रान्ता इति तर्क्यते । अपि च सारसपक्षिणः श्वेतवर्णा न बलाका इव अपि तु पक्षयोस्तेषामीषद्रक्तो वर्णः क्वचिच्च धूसरश्च स इत्यस्त्येव विशेषः । अतः पाण्डुरेति विशेषणमप्युपपद्यते । अथवा 'आपाण्डुरा' इत्यपि ज्ञेयम् । "हरिणः पाण्डुरः पाण्डुः" इत्यमरोक्तदिशाऽपीदं ज्ञायते यत्पाण्डुरशब्दो न श्वेतवर्णवाचकः, अपि तु "पाण्डुस्तु पीतभागार्धः केतकीधूलिसंनिभः" इति शब्दार्णवसाहाय्येनापि स केतकीपरागवर्णं पीतवर्णसंमिश्रितश्वेतवर्णं द्योतयति । रक्तोत्पले तु आपाण्डुरतायाः संभव एव न, शोणच्छटासंभिन्ने तु स लभ्यतैव । अपि च कोकनदस्य वर्णः कीदृश इति विप्रतिपत्तौ अमर एव आह—"शोणः कोकनदच्छविः" इति । अनेनापि ज्ञायते कोकनदं शोणवर्णं नाम ईषत्ताम्रवर्णमिति । स च वर्णः अग्नौ, लोहिताश्वे, उपलभ्यते । अग्निस्तु श्वेतो न, नापि तथा लोहिताश्वः संभवति । एवं च स्थितौ कोकनदशब्दस्य पाण्डुरशब्दसाहचर्यात् श्वेतकमले लक्षणा तेन च सारसपक्षिणां यत् श्वेतत्वं ज्ञाप्यते तत्सर्वमपि अस्वरसवहमिति ज्ञातव्यम् । अपि चाचिरमेव विदूषकेन वर्णितं यत्सा सारसपक्तिर्बलदेवबाहुदर्शनीया दृश्यत इति । तदप्यस्माकमत्राभीष्टमेव, तेन च तत्रापि वर्णाविष्करणं कर्तव्यमापतति । एवं च ग्रन्थकर्त्रा प्रतिपादितेन गते मार्गेण—कोकनदमालापाण्डुररमणीया सारसपङ्क्तिः प्रसाधितबलदेवबाहुदर्शनीया ( तस्य वर्ण इव वर्णो यस्याः सा ) स च बलदेवबाहुः ( प्रथमे मङ्गलश्लोके ) उदयनवेन्दुसवर्णः इति परम्परया सा सारसपङ्क्तिरुदयनवेन्दुसवर्णा इत्यर्थादेवापद्यत इत्यलमतिपल्लवितेन । समीपस्थमुदयनं दृष्ट्वा आश्चर्योद्गारः—अम्मो इति ।

अकल्पितं राज्ञः सन्निधानं श्रुत्वा—**हमिति** । तव कारणात्, त्वमत्र वर्तसे इत्येव हेतोः । आर्यपुत्रदर्शनमस्माभिः करणीयमपि परिहरामि वर्जयामि । ज्ञायतेऽनेन पद्मावती सर्वथैव सावधाना स्वन्यासपरिपालने । प्रथमेऽङ्के ब्रह्मचारिप्रवेशसमये प्रदर्शिता वासवदत्तया ( "हम्" इति कृत्वा ) असम्मतिरद्यापि तया

१ हला ।

वासवदत्ता—एव्वं होदु । [ एवं भवतु । ]

( तथा कुर्वन्ति । )

विदूषकः—तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे । [ तत्रभवती पद्मावतीहागत्य निर्गता भवेत् । ]

राजा—कथं भवान् जानाति ?

विदूषकः—इमाणि अवइदकुसुमाणि सेफालिआगुच्छआणि पेक्खदु दाव भवं । [ इमानपचितकुसुमान् शेफालिकागुच्छकान् प्रेक्षतां तावद्भवान् । ]

राजा—अहो विचित्रता कुसुमस्य वसन्तक !

वासवदत्ता—( आत्मगतम् । ) वसन्तअसङ्कित्तणेण अहं पुण जाणामि उज्जयणीए वत्तामि त्ति । [ वसन्तकसङ्कीर्तनेनाहं पुनर्जानामि उज्जयिन्यां वर्त इति । ]

---

स्मर्यत एवेति विज्ञेयम् । तत्र चोक्तं तया "अम्मो ! परपुरुसदंसणं परिहरदि अय्या । भोदु सुपरिवाळणीयो मण्णासो" इति । एतदेव सर्वं कारणं वासवदत्तासंनिधौ आर्यपुत्रस्यादर्शने इत्यनुसंधेयम् । इममिति समीपस्थमेव ।

**एव्वं होदु इति**—माधवीलतामण्डपप्रवेशायानुमितं तयानेन । उदयनस्य दर्शने समुत्सुकापि सा केवलं कार्यैकनिहितचक्षुस्तथाभ्यधात् । तथा कुर्वन्ति, माधवीलतामण्डपं प्रविशन्तीत्यर्थः ।

**तत्तहोदीति**—तत्रभवतीत्यादि विदूषकस्यानुमानम् । तत्र च हेतुः राज्ञा पृष्टस्य तस्याग्रिमे वचने ज्ञातव्यः ।

**कथमिति**—कोऽसौ हेतुर्येन त्वयेत्थमनुमितमिति ।

स्वतर्के हेतुमाह **इमाणीति**—अपचितानि वृन्तेभ्यः संगृहीतानि कुसुमानि येभ्यस्ते अपचितकुसुमास्तान्, शेफालिकानां गुच्छकाः स्तबकास्तान्, प्रेक्षतां भवान् । सद्योऽपचितकुसुमांस्तान्वीक्ष्य काप्यधुनैव कुसुमान्यवचित्य गतेति तर्क्यते सा च पद्मावतीं विना न संभवति तस्यास्तत्र वाल्लभ्यात् । यदि संभवेत्तदा पद्मावतीसमक्षमेवेति कथमपि कृत्वा पद्मावत्या अत्रागमनमितोऽन्यतो गमनं च निश्चयेनानुमीयत इति भावः ।

**अहो इति**—विचित्रता, श्वेतवर्णे रक्तिमसंभिन्नता । कुसुमस्येति जातावेकवचनम् ।

**वसन्तअसङ्कित्तणेणेति**—वसन्तकसङ्कीर्तनेन वसन्तकनामग्रहणेन, वसन्तकेत्यामन्त्रणं श्रुत्वेति यावत् । उज्जयिन्यामिति—स एव वसन्तकः, स एवार्य-

राजा—वसन्तक ! अस्मिन्नेवासीनौ शिलातले पद्मावतीं प्रतीक्षिष्यावहे ।

विदूषकः—भो ! तहा । ( उपविश्योत्थाय । ) ही ही सरअकाळतिक्खो दुस्सहो आदवो । ता इमं दाव माहवीमण्डवं पविसामो । [ भोः ! तथा । ही ही शरत्कालतीक्ष्णो दुस्सह आतपः । तदिमं माधवीमण्डपं प्रविशावः । ]

राजा—बाढम् । गच्छाग्रतः ।

विदूषकः—एव्वं होदु । [ एवं भवतु । ]

( उभौ परिक्रामतः । )

पद्मावती—सव्वं आउळं कत्तुकामो अय्यवसन्तओ । किं दाणिं करेह्म ? [ सर्वमाकुलं कर्तुकाम आर्यवसन्तकः । किमिदानीं कुर्मः ? ]

---

पुत्रस्य शब्दः, तदेव तस्योचारणचातुर्यं अहमपि वराकी सैवेति, सर्वेऽपि पदार्थां उज्जयिनीगतमेकत्र निवसतामस्माकं तथानुभूयमानं सुखं स्मारयन्तीति कृत्वा तस्यास्तथाभूतं चिन्तनम् ।

**वसन्तकेति**—आसीनौ उपविष्टौ । प्रतीक्षिष्यावहे प्रतिपालयावः । अत्रैव कुत्रचित्त्वत्तर्कमनुसृत्य द्रष्टव्ये सा भवेदेवात आवाभ्यामत्रैव स्थेयम् । एवं स्थिते साचिरादेव अत्रस्थाभ्यामावाभ्यां गतागतप्रसङ्गे दृश्येतेति तदाशयः । अन्यमनस्केन तेन विदूषकस्य वचनं 'निर्गता भवेत्' इति मनसि न कृतमिति ज्ञायते ।

**भो तहेति**—भोस्तथेत्युक्तेऽर्थे सम्मतिः । एवं प्रथमत उपविष्टस्य तस्य झटित्युत्थानेनातपतप्तं शिलातलं तस्य किमपि दुःसहमभूदिति ज्ञायते इत्यत उत्थायेति । तद्गर्भपरमेवाह—**ही हीति** । दुस्सहस्यातपस्य तीक्ष्णत्वे शरत्कालावतीर्णं हेतुः । शरत्समये च सूर्यातपस्य दुःसहत्वं वर्ण्यते तत्र तत्र । तथा च स्तुतिकुसुमाञ्जलौ शरद्वर्णनप्रस्तावे—"तीव्रं रविस्तपति नीच इवाचिराढ्यः, पिच्छं शिखी त्यजति मित्रमिवाकृतज्ञः" इत्यादि ।

**बाढमिति**—यत्त्वयोक्तं तत्तथैवेति तात्पर्यम् ।

**एव्वमिति**—एवं भवत्वित्यनेनाग्रतो गमनाय स्वीकृतिः प्रदर्शिता । परिक्रामतः, माधवीलतामण्डपमुद्दिश्य प्रचलतः ।

**सव्वमिति**—सर्वं, कार्यमिति शेषः । उदयनदर्शनपरीहाराय आवन्तिकायाः कार्ये कृतः समहान् प्रयत्नः इति तत्स्वरूपं विज्ञेयम् । आकुलं व्यस्तं कर्तुं कामो

चेटी—भट्टिदारिए! एदं महुअरपरिणिळीणं ओळंवळदं ओधूय भट्टारं वारइस्सं । [ भर्तृदारिके ! एतां मधुकरपरिनिलीनामवलम्बलतामवधूय भर्तारं वारयिष्यामि । ]

पद्मावती—एव्वं करेहि । [ एवं कुरु । ]

( चेटी तथा करोति । )

विदूषकः—अविहा अविहा, चिट्ठदु चिट्ठदु दाव भवं । [ अविधा अविधा, तिष्ठतु तिष्ठतु तावद्भवान् । ]

राजा—किमर्थम् ?

विदूषकः—दासीपुत्तेहि महुअरेहि पीडिदो ह्मि । [ दास्याः पुत्रैर्मधुकरैः पीडितोऽस्मि । ]

---

यस्य तादृशः । सर्वोऽपि प्रयत्नोऽनेन निष्फलीक्रियते वसन्तकेन माधवीलतामण्डपप्रवेशनेनेति । वस्तुत आतपपरीहाराय प्रविशति तस्मिन् ( न पुनः सत्यमेव ज्ञात्वा कार्यं व्याकुलीकर्तुं ) कर्तुकाम इति पद्मावत्या कृत आरोपो वृथेवाभाति । राजदर्शनपरीहारस्वरूपं कार्यमेव न ज्ञातं तेन कथं पुनस्तस्य व्याकुलीकरणे तस्य प्रवृत्तिर्वेराकस्येति वृथारोपे बीजम् । किमिदानीमित्यापतिते प्रसङ्गे उपायचिन्ता ।

**भट्टिदारिए इति**—एतामित्यनेन या खलु युक्तिः प्रदर्शिता चेट्या तेन ज्ञायते सा प्रत्युत्पन्नमतिरिति । स्त्रीणां च प्रत्युत्पन्नमतिविषये आह—"स्त्रीणामशिक्षितपटुत्वममानुषीषु संदृश्यते किमुत याः प्रतिबोधवत्यः । प्रागन्तरिक्षगमनात्स्वमपत्यजातमन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥" इति । परिनिलीनाः मधुपानार्थं अत्यन्तमासक्ता मधुकराः यस्यां सा ताम् । अवलम्बलतां द्वारप्रदेशे लम्बमानां लतामित्यर्थः । तामवधूय, हस्तेन कुशलतया चालयित्वा, भर्तारं स्वामिनमुदयनं वारयिष्यामि प्रतिबध्नामि । मया चालितायां लतायां मधुकरा उत्पतेयुस्तदुत्रासभीत्या च स बहिरेव तिष्ठेदिति तदाशयः ।

**एव्वमिति**—तथा कर्तुं सम्मतिं प्रदर्शयत्यनेन । तथा करोति, हस्तेन लतां चालयति ।

**अविहेति**—अविहेति संत्रासे । तिष्ठतु तिष्ठत्विति द्विर्वचनं प्रवेशनिवारणे ससम्भ्रमत्वद्योतकम् ।

**किमर्थमिति**—मद्गतिरोधने हेतुरुच्यतामित्याशयः ।

**दासीपुत्तेहीति**—मधुकरैरकल्पितं सन्त्रस्तोऽसौ तेभ्यः कुप्यन् सहसाऽऽक्रो-

---

१ एव्वं करेमि ( एवं करोमि )। एदं० ।

राजा—मा मा भवानेवम् । मधुकरसन्त्रासः परिहार्यः । पश्य,—

मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः ।
पादन्यासविषण्णा वयमिव कान्तावियुक्ताः स्युः ॥ ३ ॥

तस्मादिहैवासिष्यावहे ।

---

शवशः कारणं वक्ति—दास्याः पुत्रैरिति । "पुत्रेऽन्यतरस्याम् (पा० सू० ६।३।२२) षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम् ।" इति षष्ठ्या अलुक् । यथाऽहं पीडितस्तथा त्वं मा भूरिति मया निवारित इति तस्य भावः ।

**मा मेति**—मा मा, उच्चैराक्रोशत्विति शेषः । एवं, महता संरम्भेणेति । मधुकराणां सन्त्रासस्तत्कर्मकं भयोत्पादनं, परिहार्यः विदूरीकर्तव्यः । अलमेतावता सम्भ्रमेण तानुद्विज्येति भावः । पश्य, अयमेव तत्र मयोक्तेऽर्थे हेतुरिति तमेवाह—**मधुमदकला** इति । मधुनो पुष्परसस्य (मधुप्रभवो) यो मदः मत्तता तेन कलाः मधुरमस्फुटं च गुञ्जन्तः । "ध्वनौ तु मधुरास्फुटे । कलः" इत्यमरः । मधुरश्च श्रुतिसुखः, स चासौ अस्फुटोऽव्यक्ताक्षरश्च तादृशे ध्वनौ कलः । एतादृशी वर्णनपद्धतिर्बहुलं संस्कृतकाव्ये दृश्यते । तथाहि—"यस्यास्वाद्य मधूनि धूनितशिरो मञ्जु त्वया गुञ्जितम्" इति । मदनेन मन्मथेन आर्ताभिः पीडिताभिः, कामपरवशाभिरिति यावत् । प्रियाभिः उपगूढा आलिङ्गिताः । प्रियाभिः संमील्यैकत्र कृतस्य मधुपानस्य वर्णनं द्रष्टव्यमिदम्—"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः" इति । अत्र संभोगशृङ्गारस्य तिर्यग्विषयत्वाद्रसाभासः । शृङ्गारसामग्र्यां मद्यं प्रियोपगूहनं चालौकिकमानन्दं जनयत इति द्वयोरपि विशेषणयोः सार्थक्यमवगन्तव्यम् । परमानन्दमग्नानां तेषां न समाधिभङ्गस्त्वया कार्य इति तत्तात्पर्यम् । तादृशा मधुकराः, अस्माकं पादन्यासेन माधवीलतामण्डपप्रवेशनार्थं क्रियमाणेन विषण्णाः त्रस्ताश्चेत् । वयमिव, अहमिति वक्तव्ये वयमिति तदर्थिकैव वचनभङ्गिः । तया च व्यवह्रियते प्रधानपात्रैः प्रायशो नाटकेषु । व्यवहारेऽपि च सा पदे पदेऽनुभूयते । कान्तावियुक्ताः प्रियाभिर्विप्रयुक्ता भवेयुः । कान्तावियोगदुःखं पुनर्मया सम्यक्तया ज्ञायत एव तथैव दुःखभाजस्तान् मा कुर्विति तदाशयः । पद्मावत्या साकं जातेऽपि विवाहे वासवदत्तावियोगप्रयुक्तो दुःखसन्तानस्तं कामप्यवस्थां प्रापयदिति ज्ञायतेऽनेन । एतच्च राज्ञो वचनं वासवदत्तया विप्रलम्भेऽनुभूयमाने दुःखे पोषकमेवेति विज्ञेयम् । आर्यावृत्तमिदम् । तल्लक्षणं च—"यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥" इति । तस्मात्, ते कान्तावियुक्ता न स्युरित्येव हेतोरिति । इहैव, लतामण्डपाद्बहिरेव । आसिष्यावहे उपवेक्ष्यावः ।

विदूषकः—एव्वं होदु । [ एवं भवतु । ]

( उभौ उपविशतः । )

[ राजा—( अवलोक्य )

पादाक्रान्तानि पुष्पाणि सोष्म चेदं शिलातलम् ।
नूनं काचिदिहासीना मां दृष्ट्वा सहसा गता ॥ ४ ॥ ]

चेटी—भट्टिदारिए ! रुद्धा खु ह्म वयं । [ भर्तृदारिके ! रुद्धाः खलु स्मो वयम् । ]

---

एव्वमिति—एवं भवत्वित्युपवेशनेऽनुमतिः ।

उभौ इति—तत्रैव तेषामुपवेशनं ज्ञातव्यं यत्र चेट्या प्रार्थिता पद्मावती वासवदत्तया सहाचिरादेव शेफालिकाकुसुमापचयसमय उपविष्टाऽऽसीत् । एतच्च ज्ञायतेऽग्रिमेण पद्येन ।

अवलोक्येत्यादि—राजा—अवलोक्येत्यादिः सहसा गतेत्यन्तं तावत्सन्दर्भो मूले स्वप्नवासवदत्ते नोपलभ्यते । स चावलोकिते पुनर्नाट्यदर्पणे रामचन्द्रविरचिते स्वप्नवासवदत्तस्थ इत्यनुमीयते, तेनैव तत्र तथोक्तत्वात् । तथाहि—"यथा भासकृते स्वप्नवासवदत्ते शेफालिकामण्डपशिलातलमवलोक्य वत्सराजः—पादाक्रान्तानि पुष्पाणि सोष्म चेदं शिलातलम् । नूनं काचिदिहासीना मां दृष्ट्वा सहसा गता ॥ पूर्वार्धं लिङ्गमुत्तरार्धमनुमानम्" इत्यनुमानोदाहरणनिरूपणप्रस्तावप्रसङ्गसन्दर्शनेनायं सन्दर्भो मूलस्थोऽपि चिरादप्रयुक्तत्वहेतुना कथमपि भ्रष्ट एवेति कल्प्यते । तस्य चात्रैव स्थानयोग्यत्वं विज्ञाय स व्याक्रियते । अवलोक्य, शिलातलमभित इति शेषः ।

पादाक्रान्तानीति—पुष्पाणि शेफालिकाकुसुमानि, पादैराक्रान्तानि पादाघातेन क्षोदितानि परिदृश्यन्त इत्यवशेषः । इदं शिलातलं च सोष्म उष्मणा सहितं, वर्तत इति शेषः । तान्येवेमानि पुष्पाणि चेट्या पद्मावत्याः कृतेऽवचितानि, संलापरसमग्नानां तासां हस्तेभ्यः परिभ्रष्टानि पादैराक्रान्तानि च । तच्चैवेदं शिलातलं यत्रोपवेष्टुं चेट्या विज्ञापिता पद्मावती वासवदत्तया सहोपविष्टा । नूनं, उक्ताभ्यां हेतुभ्यां दृढमेतन्मयावगम्यत इति तदर्थः । यः खल्वर्थोऽनुमितस्तमेवाह—काचिदिति । काचित् योषित्, इह अस्मिन् शिलातले उपविष्टा, मां दृष्ट्वा, सहसा झटिति गता, स्वेन पालनीयं समुदाचारं वीक्ष्येत्यर्थः । सहसेत्यनेन पुष्पेषु पादाक्रमणं न जानत्या तया कृतमपि तु झटित्यपसरन्त्या तयेति न तत्र दोषावहत्वमिति सूचितम् । एवञ्च पुष्पाणां पादाक्रान्तत्वेन कस्याश्चिदन्यतो गमनं, शिलातलस्य च सोष्मत्वेन तस्या एव तत्रोपवेशनमनुमीयत इति तात्पर्यम् ।

भट्टिदारिए इति—लतामण्डपप्रवेशद्वार एव तेषामुपवेशनेन निर्गमना-

---

१ भो तह ( तथा ) ।

**पद्मावती**—दिट्ठिआ उवविट्ठो अय्यउत्तो । [ दिष्ट्योपविष्ट आर्यपुत्रः । ]

**वासवदत्ता**—( आत्मगतम् ) दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो । [ दिष्ट्या प्रकृतिस्थशरीर आर्यपुत्रः । ]

**चेटी**—भट्टिदारिए ! सस्सुपादा खु अय्याए दिट्ठी । [ भर्तृदारिके ! साश्रुपाता खल्वार्याया दृष्टिः । ]

**वासवदत्ता**—एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा पडिदेण सोदका मे दिट्ठी । [ एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः । ]

**पद्मावती**—जुज्जइ । [ युज्यते । ]

---

संभवमुत्प्रेक्षमाणायाश्चेट्या वचनं रुद्धा इति । रुद्धाः प्रतिबद्धाः । लताचालनादिकेन कृतेऽपि प्रयत्ने तयोर्वारणे स विफलीभूत इव, किमिदानीं कुर्म इति तदाशयः ।

चेट्या कृतः प्रयत्नः सर्वथैव विफलो न तयोस्तत्राप्रवेशादिति कृत्वाऽऽह—**दिट्ठिआ इति** । आर्यपुत्र उपविष्ट इति दिष्ट्या अंशेनापि वा भूयात् वरमभूदिति ।

**दिट्ठिआ इति**—उदयनप्रकृतौ चिन्तापरा सा अद्ययावदासीत् । पूर्वं तयावसरं लब्ध्वा साभिप्रायं "कीदिसो जामादुओ" इति पृष्ट्वा च स्वसमाधानं कृतं परन्तु समक्षं तं प्रकृतिस्थं पश्यन्त्यास्तस्या अद्य सविशेषं समाधानम् । प्रकृतिस्थं सुस्थं शरीरं यस्य तादृशः ।

स्वभर्तारं तथाभूतमवलोक्यानन्दाश्रुक्लिन्ननयनाम्बुजामावन्तिकां वीक्ष्याविज्ञाततत्कारणा तज्ज्ञातुकामा साक्षात्प्रश्ने स्वाधिकारमपश्यन्ती पद्मावतीं वक्ति—**भर्तृदारिके इति** । अश्रुपातो बाष्पोद्गमस्तेन सहिता ।

अश्रुप्रभवे उदयन एव प्राधान्यतः कारणमिति यथा ते न शङ्केयातां तथालीकमेव तत्कथयति—

**एषा खल्विति** । अविनयः औद्धत्येनेतस्ततः परिभ्रमणं तस्माद्धेतोः पतितेन, काशकुसुमानां तदाख्यश्वेतवर्णपुष्पविशेषाणां रेणुना परागेन सोदका साश्रुपाता । माधवीलतामण्डपे काशकुसुमानां संभवस्तु अल्प एव । तेन काशपुष्पेभ्यः समागतानां भ्रमराणां पक्षयोः संलग्नेन, तेषामविनयादुत्पतितेन च तेनेति विज्ञेयम् । अथवा किमपि कारणं वक्तव्यमापतितमिति कृत्वा यत्खलु रभसान्मुखाद्विनिर्गतं तत्तयोक्तमित्यलीकोक्तिप्रसङ्गे कथमसम्बद्धमपि प्रलप्यते तस्यायमेकः प्रकार इत्यप्यवगन्तव्यम् ।

पद्मावत्यपि यथोदयनस्य तत्रोपवेशनेन किञ्चित्सम्भ्रान्तासीत्तेन वासवदत्तोक्त-

---

१ अचिरोक्तं चेट्या "भट्टिदारिए ! रुद्धा" इति, तदत्र दृश्यते कुत्रचित् ।

विदूषकः—भो ! सुण्णं खु इदं पमदवणं । पुच्छिदव्वं किञ्चि अत्थि । पुच्छामि भवन्तं । [ भोः ! शून्यं खल्विदं प्रमदवनम् । प्रष्टव्यं किञ्चिदस्ति । पृच्छामि भवन्तम् । ]

राजा—छन्दतः ।

विदूषकः—का भवदो पिआ, तदाणिं तत्तहोदी वासवदत्ता इदाणिं पदुमावदी वा ? [ का भवतः प्रिया, तदानीं तत्रभवती वासवदत्ता इदानीं पद्मावती वा ? ]

राजा—किमिदानीं भवान् महति बहुमानसंकटे मां न्यस्यति ।

पद्मावती—हला ! जादिसे सङ्कटे णिक्खिदो अय्यउत्तो । [ हला ! यादृशे सङ्कटे निक्षिप्त आर्यपुत्रः । ]

---

सलीकमश्रुकारणं तन्मनसि तत्त्वेन लेशतोऽपि पदं नाकरोदिति ज्ञायते युज्यते इति शब्देन । युज्यते, उपपद्यते यत्त्वयोक्तमिति ।

**भो सुण्णमिति** । शून्यं जनविरहितं । अनेन निःशङ्कतया वक्तव्यं न कोऽप्यस्माकं रहःसंलापमत्र शृणुयादिति सूचितम् । प्रष्टव्यं किञ्चिदस्ति, जनसंमर्दगतत्वात्तवाद्ययावन्मया प्रष्टव्यं किमपि हृदयेन तथैव धारितं किन्त्वद्यावसरो लब्धः । ( अत एव ) भवन्तं पृच्छामि ।

**छन्दत इति**—छन्दतः यथेच्छं, पृच्छेति शेषः । मित्रप्रेमसदृशमेवोक्तं तेन ।

**का भवदो इति**—का भवतः प्रिया, पद्मावतीवासवदत्तयोर्मध्ये का तव प्रिया, अधिकमिति योजनीयम् । प्रियत्वतारतम्यज्ञानार्थं कृतस्तेन प्रश्नः । तदानीं गते काले, त्वत्समागममनुभवन्तीति शेषः । इदानीं तदभावे नूतनविवाहादूर्ध्वमस्मिन्काले, स्थितेति शेषः । वासवदत्ता चिरपरिचिताऽऽसीत्ते, पद्मावतीसमागमश्चेदानीमनुभूयत एव तत्कथयतु भवान्का द्वयोर्मध्ये तव हृदये दृढमास्थितेति तत्तात्पर्यम् ।

**किमिदानीमिति**—प्रियत्वतारतम्यविषये विप्रतिपत्तिशून्यो राजेति ज्ञायते अनेन । द्वेऽपि ते तस्य सममेव प्रिये इत्यपि सहृदयगम्यम् । यतस्तारतम्यं लेशतोऽपि तद्धृदयेऽभविष्यत्तदा सङ्कटोपन्यासपूर्वकत्वं विसङ्गतमेव भवेत् । बहुमाने तद्विषये यत्सङ्कटं कठिनावस्था तस्मिन् अथवा बहु मानं प्रमाणं यस्य तस्मिन् सङ्कटे इत्यपि । न्यस्यति क्षिपति । बहुमानश्च, एषैव मेऽधिकं प्रियेति विशिष्य कथनेन विज्ञेयः ।

**हळा जादिसे इति**—यादृशे, कियति महति सङ्कटे इति तदर्थः । ईदृशेन प्रश्नेन महत्यां दुस्तीर्यायां कठिनावस्थायां प्रक्षिप्त आर्यपुत्र इति तदाशयः । द्वितीयोद्वाहप्रसङ्गावनद्धानां पुरुषाणां कृते सुमहानेवैतादृशः प्रश्न इत्यपि विज्ञेयम् ।

**वासवदत्ता**—(आत्मगतम्) अहं अ मन्दभाआ । [ अहं च मन्दभागा । ]

**विदूषकः**—सेरं सेरं भणादु भवं । एक्का उवरदा, अपरा असण्णिहिदा । [ स्वैरं स्वैरं भणतु भवान् । एकोपरता, अपरा असन्निहिता । ]

**राजा**—वयस्य ! न खलु न खलु ब्रूयाम् । भवांस्तु मुखरः ।

**पद्मावती**—एत्तएण भणिदं अय्यउत्तेण । [ एतावता भणितमार्यपुत्रेण । ]

**विदूषकः**—भो ! सच्चेण सवामि । कस्स वि ण आचक्खिस्सं ।

---

**अहं अ इति**—अहं च मन्दभागा, मन्दं हतं भागो भागधेयं यस्याः सा, तादृश एव सङ्कटे निक्षिप्तेति शेषः । यदि "पद्मावती मे प्रियतरा" इति आर्यपुत्रेणोच्येत चेत्तदा सर्वस्वं मे नष्टं श्रवणानर्हं च श्रोतव्यमापतेद्धतभाग्यया मयेति ध्वनिः । अत उक्तं मन्दभागेति ।

**सेरं सेरमिति**—तत्प्रदेशस्य विजनत्वे दृढं विश्वतोऽसौ निःशङ्ककथने तं प्रेरयति स्वैरमित्यादिना । स्वैरं यथेच्छं भयलेशमपि मनसि न कृत्वा भणतु कथयतु भवान्, न कोऽप्यत्र विद्यते यस्ते वाचं शृणुयादिति । मनस्यकृतेऽन्यश्रवणे एकतरापि कथंचिच्छृण्वीतेत्यपि नेदानीमवसरे शक्यमिति कृत्वाऽऽह—**एकेति** । एकस्यां तयोः समीपस्थायां कदाचिल्लज्जावशात्सत्यकथने न प्रभविष्यसीति कृत्वा मया तथोच्यत इति तदाशयः । एका वासवदत्ता उपरता मृता । अपरा पद्मावती असंनिहिता समीपगता न । द्विर्वचनं च दृढविश्वासोत्पादनायेति ।

**वयस्येति**—न खलु न खलु, नैवेति । ब्रूयां कथयेयम् । तत्र हेतुमाह—भवानिति । मुखरो जल्पाकः । वाचालतास्वाभाव्यात्कदाचिन्मया कथितं भवान्प्रकाशतां नयेत्, परम्परया साक्षाद्वा पद्मावतीकर्णमपि तत् प्राप्नुयात् । मुखरः, "ऊषसुषिमुष्कमधो रः" (पा० सू० ५।२।१०७) । रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ( वार्तिकम् ) खरः । मुखरः । कुञ्जरः । इति रप्रत्ययस्तदस्यास्तीत्यर्थे ।

**एत्तएणेति**—एतावता स्वल्पेनैव वाक्येन "भवांस्तु मुखरः" इत्येवंस्वरूपेण भणितं उक्तं स्वहृदयगतं सर्वमपि वक्तव्यमिति । तच्च "वासवदत्ता मे प्रियतरा" इति विहायान्यन्न संभवति । अन्यथाऽनया वचनभङ्ग्या तेन किं साध्यत इति तस्या आशयः । अपि च यद् वक्तव्यं तस्य तन्न मत्प्रियकरमिति कल्प्यते, यतो वासवदत्ता तु मृता, न तत्र विदूषकस्य मुखरत्वेनामुखरत्वेन किमपि प्रयोजनम्, अधुना अवशिष्टा त्वाहं तत्र मुखरत्वेन संदूषितत्वात् प्रायस्तद्वक्तव्यं मया श्रवणीयमेवेति निश्चितमेवेति तदाशयः ।

एसा सन्दट्ठा मे जीहा । [ भोः ! सत्येन शपामि । कस्यापि नाख्यास्ये । एषा सन्दष्टा मे जिह्वा । ]

राजा—नोत्सहे सखे ! वक्तुम् ।

पद्मावती—अहो इमस्स पुरोभाइदा । एत्तएण हिअअं ण जाणादि ! [ अहो अस्य पुरोभागिता । एतावता हृदयं न जानाति ! ]

विदूषकः—किं[2] ण भणादि मम ? अणाचक्खिअ[3] इमादो सिळावट्टआदो ण सक्कं एक्कपदं वि गमिदुं । एसो रुद्धो अत्तभवं । [ किं न भणति मम ? अनाख्यायास्माच्छिलापट्टकान्न शक्यमेकपदमपि गन्तुम् । एष रुद्धोऽत्रभवान् । ]

---

भो सच्चेणेति—सत्येन शपामि, सत्यं प्रमाणीकृत्य शपथं करोमीति । शपथास्तु लोकैर्व्यवहारे क्रियन्ते सुतस्पर्शादिना, तत्स्वरूपं च प्रतिज्ञातेऽर्थेऽन्यथाकृते अथवा न पालिते तस्मिन् देवाः प्रकुप्य किमप्यनिष्टं जनयेयुरिति स्वैरेव निर्मितं स्वस्य बन्धनं योग्यव्यवहारनिर्वहणायेति विज्ञेयम् । यत्र शप्यते तमेवार्थमाह—कस्यापीति । नाख्यास्ये, कथयिष्यामि । एषा मे जिह्वा सन्दष्टा, दन्तैर्जिह्वादंशनेनागामिनि काले रहस्यसंभेदो मया नैव क्रियते सा चाधुनैव प्रतिबद्धेति सूचितम् । जिह्वादंशनादिपूर्विका शपथवचनप्रणाल्येषा प्रमदाजनोचिता हास्यकरस्य तस्यातितरां शोभत एव ।

सन्दिष्टायामपि जिह्वायां मुखरतास्वाभाव्यात्तत्राविश्वासपूर्वकत्वेनाह—**नोत्सहे इति** ।

**अहो इमस्सेति**—अस्य विदूषकस्य । पुरोभागिता दोषैकग्राहकत्वम् । "दोषैकदृक् पुरोभागी" इत्यमरः । दोषश्च राज्ञि उदयनेऽनेन प्रक्षिप्तो रहस्यस्यानुद्घाटनात् । तत्र च तस्य मन्दबुद्धित्वं प्रयोजकमिति पद्मावत्यभिप्रायः । तत्रैव कारणमाह—**एतावतेति** । एतावता, स्वल्पेन गूढवचनेन—"भवांस्तु मुखरः" "नोत्सहे सखे ! वक्तुम्" इत्यादिना यदुक्तं तावता । हृदयं, रहस्यं न जानाति । मादृशाः स्त्रियोऽपि यज्जानन्ति तन्न ज्ञातमनेन मन्दबुद्धिनेत्यपहासः । अत्र पुरोभागिताशब्दोऽस्थाने इति न स स्वारस्यमावहतीति विज्ञेयम् ।

**किं णेति**—अनाख्याय अकथयित्वा । अकथिते तस्मिन्नस्मात्प्रदेशात्ते मुक्तता सुलभा नैवेति "एष रुद्धः" इत्यादिप्रणयरोषवचनस्यार्थः । सुलभेन मार्गेण नास्य रहस्यस्य संभेदो भवतीति दृष्ट्वा तदर्थमन्यो मार्गो बलात्कारपुरस्कृतोऽवलम्बितस्ते-

---

१ °अंण जाणीअदि ( ज्ञायते ) । २ कधं ण । ३ जइ अणाचिक्खिअं ( यद्यनाख्येयं ) ।

राजा—किं वलात्कारेण ?[1]

विदूषकः—आम्, वळक्कारेण। [आम्, वलात्कारेण।]

राजा—तेन हि पश्यामस्तावत्।

विदूषकः—पसीददु पसीददु भवं। वअस्सभावेण साविदो सि, जइ सच्चं न भणसि। [प्रसीदतु प्रसीदतु भवान्। वयस्यभावेन शापितोऽसि, यदि सत्यं न भणसि।]

राजा—का गतिः। श्रूयताम्।

पद्मावती वहुमता मम यद्यपि रूपशीलमाधुर्यैः।
वासवदत्तावद्धं न तु तावन्मे मनो हरति॥ ५॥

---

नेति विज्ञातव्यम्। रोधनविषये रङ्गव्यवहारदिग्दर्शनपरं वाक्यं न दृश्यते, एवञ्चादत्तचक्षुस्तत्र कविरिति ज्ञायते।

**किमिति**—किं वलात्कारेण प्रसभं, मत्तः श्रोतुमिच्छसि वेति शेषः। "प्रसभं तु वलात्कारो हठः" इत्यमरः।

**आमिति**—अथ किमित्यर्थे आम्। विरतेषु सामदानादिषु दण्ड एव प्रयुज्यते इति नाहं लेशतोऽपि नीतिशास्त्रमनुसृत्य दोषास्पदं भवामीति तस्याशयः।

**तेन हीति**—तेन हि, यद्येवं तदा, पश्यामस्तावत्को वा जेष्यतीति योजनीयम्। वलात्कारोद्यतस्त्वं वा अकथने वद्धपरिकरोऽहं वा।

**पसीददु इति**—दण्डोपायेन तु विपरीतमेव सर्वं ज्ञात्वा पुनरपि सामोपायमेव प्रयुञ्जान आह वराकः—**प्रसीदत्विति**। वयस्यभावेनेति—यदि न सत्यं कथयिष्यसि तदा मित्रत्वेन विरतमिति जानीहि।

मित्रप्रेमविघातशङ्कयैव केवलमन्यथाऽभूदुदयनस्य हृदयम्। अतश्च वक्ति—**केति**। गतिरुपायः।

**पद्मावतीति**—यद्यपि रूपमलौकिकं सौन्दर्यं, शीलं स्वभावः, माधुर्यं मधुरता तच्च वाचि,। एवमेकत्रोपेतैस्तैरभिलषणीयगुणैः पद्मावती मम वहुमता अत्यर्थं प्रिया तथापि वासवदत्तायां वद्धमासक्तं मे मनस्तावन्न हरत्यपकर्षतीति। रूपशीलादिसंपन्नायां पद्मावत्यां सा कुशलता न दृश्यते यया च वासवदत्ताया मे हृदयमाकृष्टमिति भावः। एवमतिमहति सङ्कटे पतितस्य कस्यचिदन्तःकरणसंवेदनावर्णनप्रकारश्च सुमहान्कठिनः। स च सौकर्येणात्रेत्यहो कुशलता कवेः। मम वहुमतेत्यत्र "क्तस्य च वर्तमाने। (पा० सू० २।३।६७) वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात्। राज्ञां मतो वुद्धः पूजितो वा" इति षष्ठी। आर्यावृत्तमिदम्॥ ५॥

---

वासवदत्ता—( आत्मगतम् ) भोदु भोदु । दिण्णं वेदणं इमस्स परिखेदस्स । अहो अण्णादवासं पि एत्थ बहुगुणं सम्पज्जइ ! [ भवतु भवतु । दत्तं वेतनमस्य परिखेदस्य । अहो अज्ञातवासोऽप्यत्र बहुगुणः सम्पद्यते ! ]

चेटी—भट्टिदारिए ! अदक्खिण्णो खु भट्टा । [ भर्तृदारिके ! अदाक्षिण्यः खलु भर्ता । ]

पद्मावती—हळा ! मा मा एव्वं । सदक्खिण्णो एव्व अय्यउत्तो, जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि सुमरदि । [ हला ! मा मैवम् । सदाक्षिण्य एवार्यपुत्रः, य इदानीमप्यार्याया वासवदत्ताया गुणान् स्मरति । ]

वासवदत्ता—भद्दे ! अभिजणस्स सदिसं मन्तिदं । [ भद्रे ! अभिजनस्य सदृशं मन्त्रितम् । ]

---

**भोदु भोदु इति**—भवतु भवतु, ज्ञातं सर्वमेतावतैव वचनेनेति शेषः । अस्य परिखेदस्य, सद्योऽनुभूयमानस्य दुःखस्य त्वद्विरहे इति यावत् । वेतनं मूल्यं दत्तं, तथानुभूयमानं दुःखमपीष्टफलप्रदमभूदिति । "कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् । भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि" इत्यमरः । तावदपि विरहदुःखमनेन स्वल्पेनापि वचनेन परिमार्जितमिति तदाशयः । अत्र, पद्मावतीसन्निधौ अज्ञातवासः, स्वस्य विषयेऽज्ञानमपरेषामेतादृशो निवासः, प्रच्छन्नस्वरूपत्वपूर्वकत्वेन वास इति तदर्थः । बहुगुणोऽनेकफलसंभिन्नः । गुणानां स्वरूपं तु, स्वस्मिन्विषये प्रीतेराधिक्यं, पद्मावत्यां च तस्य तथैव स्नेहवत्त्वं, पद्मावतीप्राप्त्या च शत्रुनाशपूर्विका भाविनी स्वराज्यप्राप्तिरित्यादि विज्ञेयम् ।

**भट्टिदारिए इति**—मृतायामपि वासवदत्तायां स्नेहाधिक्यं प्रकटीकुर्वन्नदक्षिण एवायमिति । नायकस्य दाक्षिण्यविषये च प्रोक्तं साहित्यदर्पणे—"एषु ( नायकेषु मध्ये ) त्वनेकमहिलासमरागो दक्षिणः कथितः" । द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायक इति तदर्थः । एतच्चास्य विषये नैव सङ्गच्छत इति तदाशयः ।

**हळेति**—मा मा एवं, भणेति शेषः । दाक्षिण्येन सहित एव । दाक्षिण्यमत्र यद्यपि चेटीदृष्ट्या स्वविषये न तथापि वासवदत्ताविषये तद्दृश्यत इति तथैव स इति तदभिप्रायः । तदेव प्रतिपादयति य इदानीमित्यादिना । इदानीं, मया सह विवाहं कृत्वा अस्मिन्समयेऽपीति । यथापूर्वमेव तद्गुणान् स्मरति न तत्र लेशतोऽपि परिहीनमित्यहो तस्य दाक्षिण्यमिति ।

**भद्दे इति**—भद्रे इति चेटीं प्रति संबोधनम् । अदाक्षिण्यत्वेन संदूषितस्य

**राजा**—उक्तं मया । भवानिदानीं कथयतु । का भवतः प्रिया तदा वासवदत्ता, इदानीं पद्मावती वा ?

**पद्मावती**—अय्यउत्तो पि वसन्तओ संवुत्तो ! [ आर्यपुत्रोऽपि वसन्तकः संवृत्तः ! ]

**विदूषकः**—किं मे विप्पलविदेण । उभओ वि तत्तहोदीओ मे वहुमदाओ । [ किं मे विप्रलपितेन । उभे अपि तत्रभवत्यौ मे वहुमते । ]

**राजा**—वैधेय ! मामेवं वलाच्छ्रुत्वा किमिदानीं नाभिभाषसे ? ]

**विदूषकः**—किं मं पि वळक्कारेण ? [ किं मामपि वला-त्कारेण ? ]

**राजा**—अथ किं, बलात्कारेण ।

---

राज्ञोऽन्यथात्वं साधयन्त्याह—अभिजनस्येति । अभिजनस्य कुलस्य सदृशं योग्यम् । कुलवतो जनस्य व्यवहारोऽङ्गीकृतोऽनेन, न पुनः प्रथमा पत्नी मृता किमिदानीं तत्प्रेम्णा स्मृतेन द्वितीयैव प्रशंसनीयेति स्वार्थप्रसक्तस्य सामान्यजनस्येवेति हृदयम् ।

स्वहृदयमन्त्रितं तत्तथैवेति वान्यथा वेति परिज्ञानाय तत्रैव विषये तस्यानुभूतिं पृच्छति—**उक्तमिति** । तदा व्यतीते काले मोदकखाद्यवितरणादिना तया वासवदत्तया त्वं वहुमानितो, इदानीं पद्मावत्या वा ? एवं च का तवाधिकमिष्टा भातीति प्रियाशब्दस्यार्थः ।

**अय्यउत्तो इति**—आर्यपुत्रोऽपि वसन्तकः संवृत्तः, वसन्तकसदृश एव सञ्जातः स्नेहविषये, तथैव कठिनप्रश्नकारित्वात् । अविप्रतिपत्तौ मग्नः प्रायः सर्वोऽपि जन एवं भवति नात्राश्चर्यमिति तदुक्तेस्तात्पर्यम् ।

**किं मे इति**—विप्रलपितेन, विरुद्धं प्रलपितं भाषणं तेन, निरर्थकवचनेनेत्यपि । "विप्रलापो विरोधोक्तिः" इत्यमरः । "विप्रलापो विरोधोक्तावनर्थकवचस्यपि" इति हैमः । तत्रभवत्यौ वासवदत्तापद्मावत्यौ ।

**वैधेय इति**—स्नेहकथने उत्साहरहितस्यापि मम हृदयं येन केनापि प्रकारेण वसन्तकेनाज्ञायत स्वस्य तु न स्पष्टतया प्रकटीक्रियत इति वीक्ष्य तस्य क्रोधोक्तिः वैधेय इति । वैधेय मूर्ख ! मां बलात्, बलात्कारेण वयस्यभावशापादिकेन श्रुत्वा, मयोक्तं श्रुत्वेति तदर्थः । न अभिभाषसे, सत्यं न कथयसीति यावत् ।

**किमिति**—किं मामपि बलात्कारेण, श्रोतुमिच्छसीति शेषः । यथा मया त्वं बलादेवानाख्यायेऽपि वचसि प्रयुक्तस्तथैवाहमपि त्वया प्रयुज्ये वेत्यपेरर्थः ।

**अथ किमिति**—अथ किमित्यङ्गीकारे । त्वदाचरितमेव मयाप्यङ्गीक्रियत इति तदाशयः ।

विदूषकः—तेण हि ण सक्कं सोदुं । [ तेन हि न शक्यं श्रोतुम् । ]

राजा—प्रसीदतु प्रसीदतु महाब्राह्मणः । स्वैरं स्वैरमभिधीयताम् ।

विदूषकः—इदाणिं सुणादु भवं । तत्तहोदी वासवदत्ता मे बहुमदा । तत्तहोदी पदुमावदी तरुणी दंसणीया अकोवणा अणहङ्कारा महुरवाआ सदक्खिण्णा । अअं च अवरो महन्तो गुणो, सिणिद्धेण भोअणेण मं पच्चुगच्छइ वासवदत्ता "कहिं णु खु गदो अय्यवसन्तओ त्ति" । [ इदानीं शृणोतु भवान् । तत्रभवती वासवदत्ता मे बहुमता । तत्रभवती पद्मावती तरुणी, दर्शनीया, अकोपना, अनहङ्कारा, मधुरवाक्, सदाक्षिण्या । अयञ्चापरो महान् गुणः, स्निग्धेन भोजनेन मां प्रत्युद्गच्छति वासवदत्ता "कुत्र नु खलु गत आर्य वसन्तकः" इति । ]

**वासवदत्ता—**( आत्मगतम् ) भोदु भोदु, वसन्तअ ! सुमरेहि दाणिं एदं । [ भवतु भवतु, वसन्तक ! स्मरेदानीमेतत् । ]

---

**तेण हीति**—तेन हि, तस्माद्धेतोः, बलात्कारेणेति । बलात्कारेण यदि श्रोतुमिच्छसि तदा बद्धं मे मुखमित्यवेहीति तदाशयः ।

**प्रसीदत्विति**—यः खलु सामोपायो विदूषकेनाचरितः स एवाधुना राज्ञेति परस्परं वयस्यभावेन परवशयोस्तयोरतितरां शोभत एव तत् । । स्वैरं, यथेच्छमभिधीयतामुच्यताम् । न मया पुनर्बलात्कारः क्रियत इति ।

**इदाणिमिति**—राज्ञा स्वविषये लब्धमेव विजयं स्वहस्तगतं कृत्वा बहुमानप्रयुक्तमिवात्मानं मन्यमानो वक्ति—इदानीमिति । तत्रभवती वासवदत्ता मे बहुमता पद्मावती तु न तावता परिमाणेनेत्यर्थादेवापद्यते । इमं चार्थं मनसि झटिति गृहीत्वा कदाचिद्वयस्यहृदयानुगुणं किञ्चिद्विवेत्तथा स्वानुभूतेरपि किमपि विपरीतं भूयादित्याशङ्काग्रस्तः पद्मावतीगतगुणानपि वक्ति तत्रभवतीति । अयं चेत्यादिना वासवदत्तागतं स्वस्यौदरिकस्योपकारकं विशेषं गुणं प्रकटयति । तच्चैतत्पद्मावतीविषये नेति कृत्वा सैव मे बहुमतानेन हेतुनेति तदभिप्रायः । स्निग्धेन भोजनेनेति हेतौ तृतीया । तदुक्तम् "फलमपीह हेतुः" इति । प्रत्युद्गमनस्य फलं स्निग्धं भोजनमिति विज्ञेयम् । कुत्र न्विति तदुक्त्यनुकरणम् । प्रत्युद्गच्छतीति भूतार्थे ।

**भोदु भोदु इति**—भवतु भवतु, अलमेतावतैव बहुमानेनेति तदर्थः ।

---

१ विसेसो महन्तो ( विशेषो म० ) ।

**राजा**—भवतु भवतु, वसन्तक! सर्वमेतत्कथयिष्ये देव्यै वासवदत्तायै।

**विदूषकः**—अविहा वासवदत्ता! कहिं वासवदत्ता! चिरा खु उवरदा वासवदत्ता। [अविहा वासवदत्ता! कुत्र वासवदत्ता! चिरात्खल्परता वासवदत्ता।]

**राजा**—(सविषादम्) एवम्। उपरता वासवदत्ता।[1]

अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया।
ततो वाणी तथैवेयं पूर्वाभ्यासेन निस्सृता ॥ ६ ॥

---

अथवा ज्ञायत एव मया ते मद्विषयकः सुमहानादर इति शेषः। इदानीमस्मिन्समये एतत्, यत्त्वयोक्तमधुना तत्, स्मर। अधुना मम प्रकटसन्निधानाभावात्त्वया केवलं तत् स्मृत्वैव संतोषः स्वीकार्यः समीपस्थायां जीवन्त्यामपि मयि तत्सौख्यं तुभ्यं मया न दीयते कार्यवशादिति तद्हृदयम्। एतस्य वचस आत्मगतत्वेनेष्टतया कुत्रचित् "आत्मगतम्" इति न दृश्यते तत्प्रमादेनैव भवितव्यम्।

**भवत्विति**—सर्वमेतत्, यत्त्वया मया पृष्टेन प्रत्युत्तरितं तदखिलमिति। स्निग्धभोजनोपनयनादिना सर्वथैव सन्तुष्टो महाब्राह्मणो वसन्तकस्त्वयीति कथनस्य प्रकारः। तदेतद्वाक्यमुदयनस्य मुखाद्विनिर्गतं ज्ञात्वेदमवगन्तव्यं यत्, पूर्वस्मृत्यभिभूतोऽसौ तदानींतनीमवस्थामनुभवन्तमात्मानं मनुते वराक इति।

**अविहेति**—अविहेति विषादे। कुत्र वासवदत्ता, वासवदत्तायै कथयितुमुद्युक्तस्य ते स्मृतिभ्रंशः सञ्जात इत्याभाति सा च उपरता, मृता। कस्मै वा कथयसीति।

**एवमिति**। एवमिति स्वीकृतौ। एवं, तत्तथैव यत्त्वयोक्तम्। उपरता वासवदत्ता, मया पुनर्विवशेन विस्मृतं तदित्यभिप्रायः। तत्रैव कारणं वक्ति—

**अनेनेति**—त्वया अनेन प्रस्तुतेन परिहासेन प्रीतिविषयकेन नर्मप्रसङ्गेन मे मनः व्याक्षिप्तमन्यथावृत्ति कृतम्। "द्रवकेलिपरीहासाः क्रीडा खेला च नर्म च" इत्यमरः। अत एव मया स्थलकालादिकमविचार्यैवं व्यवहृतमिति भावः। ततस्तस्मादेव कारणात्, कारणं च मनसोऽन्यथावृत्तित्वम्। इयं, अचिरोक्ता वाणी "सर्वमेतत्" इति स्वरूपा। पूर्वाभ्यासेन पूर्वं वासवदत्ता सहवासकाले योऽभ्यासः ईदृग्वाक्यप्रयोगेषु दृढः परिचयस्तेनैव हेतुना। तथैव, पूर्वाभ्यासानुकूलैव निस्सृता मुखाद्बहिर्विनिर्गता। न तत्र किमपि बुद्धिपूर्वकत्वं वर्तत इत्याशयः। अनुष्टुप् छन्दः ॥ ६ ॥

---

1 वयस्य।

पद्मावती—रमणीओ खु कहाजोओ णिसंसेण विसंवादिओ। [ रमणीयः खलु कथायोगो नृशंसेन विसंवादितः । ]

वासवदत्ता—( आत्मगतम् ) भोदु, भोदु, विस्सत्थह्मि । अहो पिअं णाम, ईदिसं वअणं अप्पच्चक्खं सुणीअदि । [ भवतु भवतु, विश्वस्तास्मि । अहो प्रियं नाम, ईदृशं वचनमप्रत्यक्षं श्रूयते । ]

विदूषकः—धारेदु धारेदु भवं । अणदिक्कमणीओ हि विही । ईदिसं दाणिं एदं । [ धारयतु धारयतु भवान् अनतिक्रमणीयो हि विधिः । ईदृशमिदानीमेतत् । ]

राजा—वयस्य ! न जानाति भवानवस्थाम् । कुतः,—

---

**रमणीओ इति**—रमणीयः आल्हादजनकः । स्वप्रियजनस्मृतिसंभिन्नतयोदयनस्य यथा आल्हादजनकस्तथैव स प्रीत्युत्पादकविषयव्यतिकरेणास्माकमपि तथा । तादृशोऽसौ कथायोगः कथाप्रबन्धः । नृशंसेन पापेन, क्रूरेण, विसंवादितः विसंस्थूलीकृतः । नृशंसत्वं च विदूषकस्यैवार्थात्सिध्यति, तेनैव "उपरता वासवदत्ता" इति वचनेन तथा कृतत्वात् । अदूरदर्शी स्थूलप्रज्ञश्च खल्वयं वसन्तक इति तदभिप्रायः ।

**भोदु भोदु इति**—विश्वस्तास्मि लब्धप्रत्ययास्मि । प्रत्ययश्चार्यपुत्रस्नेहविषयकः । पूर्वं च मया "आर्यपुत्रोऽपि नाम परकीयः संवृत्तः" इत्यादिना तत्स्नेहविषये महती शङ्का प्रदर्शिता सा चाधुनानेन प्रसङ्गेन निःशेषं विलयमगमदिति तदाशयः । अहो प्रियं नाम, अत्यर्थं प्रियं नात्र शङ्कालेशोऽपीति, ( यत् ) ईदृशं प्रीतिकरमुक्तप्रकारं वचनं अप्रत्यक्षमपि, स्वस्य पृष्ठतोऽपि, श्रूयते । दृश्यते ह्ययं प्रकारो जगति यत्कस्यचित्समक्षं तं जनाः प्रशंसन्ति तत्पृष्ठतश्च तं निन्दन्तीति । अप्रत्यक्षेऽपि यदा स्वस्य स्तुतिः श्रूयते तदा तत्प्रियतममेवेति भावः ।

वासवदत्तास्मृत्युत्पादकत्वेन स्वमेव तस्य विषादे हेतुं मन्वानः ससान्त्वनमाह **धारेदु इति** । धारयितु समाश्वसितु, । हि यस्मात्, विधिः भागधेयं अनतिक्रमणीयो दुर्लङ्घ्यः । यानि खलु यस्य भाग्याक्षराणि तानि तेनोपभोक्तव्यान्येव न काऽपि तत्र कस्यापि मोचने प्रत्याशेति भावः । "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः । ईदृशमिदानीमेतत्, यत्खल्वेतादृशं भवितव्यं तद्भवितव्यमेव न तत्र कस्यापि प्रभुत्वमिति तदर्थिका वचनभङ्गिः । दैवायत्ते वस्तुनि न कस्यापि हस्तः प्रसरतीति भावः । तदर्थकमेवाह क्षेमेन्द्रः, "केनान्येन विलङ्घ्यते विधिगतिः पाषाणलेखासखी" । "वन्ध्यं सर्वविपर्ययेण कुरुते दैवी गतिः पौरुषम्" इति ।

**वयस्येति**—भवान्, अवस्थां अर्थान्मदीयां न जानाति । अत एव त्वयेत्थमुक्तमिति । सर्वथा सुस्थस्य ते उपपन्नमेवेदं सर्वम् । द्रष्टव्यं कादम्बर्यां कपिञ्जलपुण्डरीकसंवादे—"सखे ! किं बहुनोक्तेन ? सर्वथा सुस्थोऽसि । सुखमुपदिश्यते परस्य ।

दुःखं त्यक्तुं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम् ।
यात्रा त्वेषा यद्विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥ ७ ॥

**विदूषकः**—अस्सुपादकिळिण्णं खु तत्तहोदो मुहं । जाव मुहोदअं आणेमि । [ अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम् । यावन्मुखोदकमानयामि । ]

( निष्क्रान्तः । )

---

यस्य चेन्द्रियाणि सन्ति मनो वा विद्यते यः पश्यति वा शृणोति वा श्रुतमवधारयति वा यो वा शुभमिदं न शुभमिदमिति विवेक्तुमलं स खलूपदेशमर्हति । मम तु सर्वमेवेदमतिदूरापेतम् । अवष्टम्भो ज्ञानं धैर्यं प्रतिसंख्यानमित्यस्तमितैषा कथा । दूरातीतः खलूपदेशकालः समतिक्रान्तो धैर्यावसरः” इत्यादि । कारणजिज्ञासायामाह कुत इति ।

**दुःखमिति**—बद्धानि मूलानि येन सः, दृढमवस्थित इति यावत्, योऽनुरागः प्रेम स दुःखं यथास्यात्तथा त्यक्तुं, शक्य इति शेषः । कस्यचिद्विषये उत्पन्नो दृढः स्नेहः सहसा हृदयान्नापयातीति भावः । ( एवञ्च ) दुःखं, तादृशजनविषयकं स्मृत्वा स्मृत्वा पौनःपुन्येन सविशेषं स्मृतं तदिति तदर्थः, नवत्वं याति, नवं नवमिवाभाति । दुःखस्य अतीतस्यापि नवीनत्वे तत्स्मरणं हेतुः । एवं चानेन प्रसङ्गेन स्मरणविषयतामापन्नेऽखिलेऽतीतवस्तुजाते दुःखाक्रान्तस्य मेऽवस्थाया ज्ञानमेव ते नेति तदाशयः । स्मरणस्य यानस्य चैककर्तृकत्वाभावात्स्मृत्वेत्यत्र ल्यप्प्रत्ययश्चिन्त्य एव । अस्यां स्थितौ कः खलूपायो येन कश्चित्सुस्थोंऽशेनापि स्यादिति तमेवाह—यात्रेति । एषा तु वक्ष्यमाणा यात्रा लोकव्यवहारः लक्षणया जगति परिदृश्यमाना रीतिरिति यावत् । “यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः क्रियाम्” इति मेदिनी । यत् इह जगति बुद्धिर्मनः, बाष्पमश्रूणि विमुच्य । अश्रूणि च दुःखप्रभवाणि, दुःखं चोपरतप्रियजनविषयकमिति तदर्थमश्रुविमोचनं कृत्वेति भावः । प्राप्तमनृण्यं ऋणाभावः यया सा तादृशी सती प्रसादं अकालुष्यं स्वच्छतां वा याति प्राप्नोति । अत्र बुद्धिप्रसादेऽश्रुविमोचनं कारणम् । पूरोत्पीडे तडागस्य परीवाहः प्रतिक्रियेति न्यायेन तेनैव तस्याः परिशान्तिरिति तात्पर्यम् । मृतस्य प्रियजनस्य सौहार्दऋणतोऽश्रुमोचनेनैव विमुक्तिर्नातोऽन्यथेति । विमुच्य यातीत्यत्राप्येककर्तृकत्वाभावाल्ल्यप्प्रत्ययश्चिन्त्यः । एष च दोषः “स्मृत्वा स्मृत्वा अवस्थितस्य जनस्य दुःखं नवत्वं याति”, तथैव “बाष्पं विमुच्यावस्थितस्य जनस्य बुद्धिः प्रसादं याति” इति कृत्वा परिहीयेतेत्यवगन्तव्यम् । शालिनीवृत्तमेतत् । लक्षणमुक्तपूर्वमेव ॥ ७ ॥

**अस्सुपादकिळिण्णमिति**—अश्रुपातेन बाष्पोद्गमेन क्लिन्नमार्द्रं । तत्र-

पद्मावती—अय्ये ! वप्फपडलन्तरिदं[1] अय्यउत्तस्स मुहं । जाव णिक्कमह्म । [ आर्ये ! वाष्पपटलान्तरितमार्यपुत्रस्य मुखम् । यावन्निष्क्रामामः । ]

वासवदत्ता—एव्वं होदु । अहव चिट्ठ तुवं । उक्कण्ठिदं भत्तारं उज्झिअ अजुत्तं णिग्गमणं । अहं एव्व गमिस्सं । [ एवं भवतु । अथवा तिष्ठ त्वम् । उत्कण्ठितं भर्तारमुज्झित्वायुक्तं निर्गमनम् । अहमेव गमिष्यामि । ]

चेटी—सुट्ठु अय्या भणादि । उवसप्पदु दाव भट्टिदारिआ । [ सुष्ठु आर्या भणति । उपसर्पतु तावद्भर्तृदारिका । ]

पद्मावती—किं णु खु पविसामि ? [ किं नु खलु प्रविशामि ? ]

वासवदत्ता—हळा ! पविस । [ हला ! प्रविश । ] ( इत्युक्त्वा निष्क्रान्ता । )

---

भवतः, वस्तुतस्तु समीपस्थे जने आमन्त्रयितव्येऽत्रभवत इत्येव वक्तुमुचितम् । अथवोचितमपि तद्यदेतद्वाक्यं स्वमेवोद्दिश्योक्तं चेत् । मुखस्य ( प्रक्षालनार्थं ) उदकं, मुखोदकमिति मध्यमपदलोपी समासः ।

**अय्ये इति**—वाष्पस्य पटलं छदिः ( आच्छादनं ) समूहो वा तेनान्तरितं व्याप्तम् । "छदिर्नेत्ररुजोः क्लीवं समूहे पटलं न ना" इत्यमरः । यावत् निष्क्रामामः एतस्मात्स्थानाद्बहिर्गच्छामः । वाष्पोद्गमरुद्धदृष्टित्वादार्यपुत्रोऽस्मान्द्रष्टुं न पारयेत्, वसन्तकश्च पूर्वमेवोदकानयनाय विदूरं गतः, अतो नास्माभिर्विलम्बः कार्य इति तदभिप्रायः ।

**एव्वं होदु इति**—एवं भवत्विति सम्मतौ । यद्यपि स्वकार्यं सिध्यति तथाप्यार्यपुत्रं तथावस्थायां निक्षिप्य गन्तुमयोग्यं, स च मत्कारणादेवैतादृशीमवस्थामनुभवतीति मनसि कृत्वा परिपालनीयकार्यानुगुणत्वमङ्गीकृत्यैव तामाह—**अथवेति** । उत्कण्ठितं दुःखातिरेकपर्याकुलम् । स्वेन त्वधुनाऽऽर्यपुत्रोऽन्वासितुमशक्यः, यया कयाप्यन्वासितो भवत्वार्यपुत्रः सर्वथैव कथमपि सुस्थो भूयादिति तस्या आशयः ।

यद्यपि विफलीभूयादस्माकं प्रयत्नोऽनेन करणेन तथापि यद्वासवदत्तयोक्तं तत्तथैवेति मन्वाना चेटी आह—**सुट्ठु इति** ।

**किं णु खु इति**—किं नु खल्विति प्रवेशनविषये पृच्छावचनम् । अथवा प्रवेष्टुकामायास्तस्या वासवदत्तामुद्दिश्यामन्त्रणार्थकं वाक्यम् ।

**हळेति**—हला, प्रविश । नात्र कापि शङ्का त्वया कार्येति शेषः । प्रवेशायानुमतिं ददावनेन सा ।

---

१ बप्फाउलपडन्तरिदं ( बाष्पाकुलपटान्तरितं ) ।

( प्रविश्य )

**विदूषकः**—( नलिनीपत्रेण जलं गृहीत्वा ) अई ! तत्तहोदी पदुमावदी । [ अयि ! तत्रभवती पद्मावती । ]

**पद्मावती**—अय्य ! वसन्तअ ! किं एदं ? [ आर्य ! वसन्तक ! किमेतत् ? ]

**विदूषकः**—एदं इदं । इदं एदं । [ एतदिदम् । इदमेतत् । ]

**पद्मावती**—भणादु भणादु अय्यो भणादु । [ भणतु भणत्वार्यो भणतु । ]

**विदूषकः**—भोदि ! वादणीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण संस्सुपादं खु तत्तहोदो मुहं । ता गह्णदु होदी इदं मुहोदअं । [ भवति ! वातनीतेन काशकुसुमरेणुनाक्षिनिपतितेन साश्रुपातं खलु तत्रभवतो मुखम् । तद् गृह्णातु भवतीदं मुखोदकं । ]

---

वासवदत्तासमक्षं स्वभर्तुः समीपं गमनं तस्या अनुचितमिति मन्वानः कविः प्रथमतस्तस्या एव निर्गमनमाह—**इत्युक्त्वेति** । नलिनीपत्रेणेति—उदकेन पूर्णं कमलिनीपलाशसंपुटं हस्ते धृत्वेति यावत् । अक्लिपितावस्थानां पद्मावतीं दृष्ट्वा तस्याश्चर्योद्गारः—**अयीति** ।

**अय्येति**—अजानानेव पृच्छति, किमेतदिति । किं कस्मात्कारणात् । एतत्, "आर्यपुत्रस्य मुखकमलमश्रुपातक्लिन्नं, तव च हस्ते जलेन पूर्णः कमलिनीपलाशसंपुटः" इति दृश्यमानं वस्तु ।

**एदं इदमिति**—अनेन च वसन्तकस्य स्थूलबुद्धित्वं सम्यक्तया ज्ञायते, उचितस्यार्थस्य प्रतिपादने प्रत्युत्पन्नमतित्वाभावेन यथाकथंचित्प्रत्युत्तरितत्वात् । वस्तुतस्तु सत्यवस्तुगोपनपूर्वकत्वेन किमपि तथाऽऽख्येयं यत्र कस्यापि शङ्का नोत्पद्येत । सत्यवस्तुगोपनं च कृतं तेन, किन्तु कृत्रिमं प्रख्यापनं सङ्कटविमग्नस्येव विमूढस्य तु तस्य झटिति नास्फुरदिति ज्ञायते । तथा च स्वस्य हास्यक्रियाकारित्वानुगुणमेवाह—**एतदिति** । एतत्, नलिनीदलं, इदं, उदकम् । तमेव चार्थं विप्रतिपत्तिशून्योऽसौ केवलं शब्दप्रातिलोम्येन हास्यकरमाह इदमिति । एतत्पदेनोदयनस्याश्रुपातक्लिन्नमुखमनुलक्ष्याङ्गुल्या निर्देश इत्यप्यवगन्तव्यम् ।

**भणादु भणाद्विति**—भणतु भणतु, सर्वं स्पष्टं कथयत्विति । किमिति त्वयैवं सामान्यशब्दैः कथ्यते, येन च शीघ्रमर्थबोधोऽपि मे सुदुर्लभ इति तदाशयः । तदवस्थं तं तस्यै निवेदयितुमनिच्छन्स्वप्रतिभोत्थितं यत्किमप्यवसरयोग्य-

---

१ एसा ( एषा ) । २ अस्सुपादकिण्णं ।

पद्मावती—(आत्मगतम्) अहो सदक्खिण्णस्स जणस्स परिजणो वि सदक्खिण्णो एव्व होदि । (उपेत्य) जेदु अय्यउत्तो । इअं सुहोदअं । [ अहो सदाक्षिण्यस्य जनस्य परिजनोऽपि सदाक्षिण्य एव भवति । जयत्वार्यपुत्रः । इदं मुखोदकम् । ]

राजा—अये पद्मावती ! (अपवार्य) वसन्तक ! किमिदम् ?

विदूषकः—(कर्णे) एव्वं विअ । [ एवमिव । ]

राजा—साधु वसन्तक ! साधु । (आचम्य) पद्मावति ! आस्यताम् ।

---

माह—भोदीति । ज्ञायतेऽनेनायमपि वासवदत्ता इव प्रत्युत्पन्नमतिरिति । तस्य साश्रुपाते मुखे काशपुष्पपरागो वातानीतोऽक्ष्णोः पतितः कारणं विज्ञेयम् । द्रष्टव्यं हि तद्यदचिरोक्तं वासवदत्तया "एसा खु महुरआणं आविणआदो" इत्यादि । पद्मावतीसंनिधौ स्वस्यान्वासनमनुचितं मन्वान आह—तदिति । गृह्णात्विति—उपनयतु च तस्मै तदुपस्प्रष्टुमिति शेषः ।

**अहो इति**—सदाक्षिण्यस्य दाक्षिण्ययुक्तस्य । "रत्नं रत्नेन" "गावश्च गोभिः" इति न्यायेन दक्षिण एव दक्षिणस्य जनस्योदयनस्य परिजनः सहायो वसन्तक इति युक्तमेव । यतो यः खलु स्वेनैवोपनेतव्ये मुखोदकेऽवसरं लब्ध्वा मामेव तत्रोचितामुत्प्रेक्षमाणो न्ययोजयदिति तदाशयः । जेदु इत्यादि प्रकाशमाहेत्यवगन्तव्यम् । उपेत्येत्यत्र गृहीत्वोपेत्येति युक्तमाभाति ।

**अये इति**—अये इति सम्भ्रमे । अकल्पितसंनिधानां पद्मावतीं दृष्ट्वा सम्भ्रान्तो वसन्तकं पृच्छति—**किमेतदिति** । एतत्, जलाहरणादिकं किं किंकारणकम् । किं च कारणं त्वया पद्मावत्यै कथितमत्र विषये इत्यपि च पृच्छायां गर्भितम् । **अपवार्येति**—इयं च नाट्योक्तिरवगन्तव्या । तल्लक्षणं च साहित्यदर्पणे "तद्भवेदपवारितम् । रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ॥" इति ।

**एव्वमिति**—सत्यवस्तुगोपनार्थं स्वेन कृतं प्रयत्नं वातनीतेनेत्यादिवचनेन तत्कर्णे कथयति—**एवमिवेति** । एतच्च ज्ञायतेऽग्रिमेणैव पद्येन "शरच्छशाङ्कगौरेण" इत्यादिना । एवमिवेति वाक्यं न खलु विदूषकेण वक्तव्यमुदयनस्य कर्णे किन्तु गौरवभिया पूर्वगतस्य सन्दर्भस्य सहृतं स्वरूपमिति ग्रन्थकर्तृभिः प्रायस्तत्र तत्र लिख्यते । तस्य च श्रवणस्याविषयत्वेऽपि पूर्वार्थानुसंधानात्सर्वैरपि तज्ज्ञायत एव ।

**साध्विति**—एतद्वाक्यमपवारितेन वक्तव्येऽपि न तत्तथेति ग्रन्थकर्तुरेवानवस्थानम् । पद्मावतीत्यादि तु प्रकाशमित्यनुसंधेयम् । अवसरयोग्यमलीकमप्यश्रुकारणं यद्वसन्तकेन पद्मावत्यै कथितं तद्विषये तं प्रशंसन्नेवाह—**साध्विति** । आचम्य पद्मावत्युपनीतेन जलेनोपस्पृश्य, साश्रुपातं मुखं नयने च तथाभूते जलेन क्षालयित्वेति तदर्थः ।

पद्मावती—जं अय्यउत्तो आणवेदि । [ यदार्यपुत्र आज्ञापयति । ] ( उपविशति )

राजा—पद्मावति !

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ! ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ ८ ॥

( आत्मगतम् )

इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत् ।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः ॥ ९ ॥

विदूषकः—उइदं तत्तहोदो मअधराअस्स अवरह्णकाळे भवन्तं अग्गदो करिअ सुहिज्जणदंसणं । सक्कारो हि णाम सक्कारेण पडि-

---

जं अय्यउत्त इति—अत्यादरप्रयुक्तमङ्गीकारार्थे वचनमेतादृशम् । यद्; यथा ।

शरच्छशाङ्केति—हे भामिनि, सुंदरि ! शरदः शरत्कालीनो यः शशाङ्कश्चन्द्रः, स इव गौरः शुभ्रवर्णस्तेन । नयनयोः साश्रुपातकरणे शुभ्रवर्णस्यैव वस्तुनः न प्रयोजकत्वं किमप्युत्प्रेक्ष्यते इत्यनर्थकमिदं विशेषणमित्याभाति, एवं चापुष्टार्थत्वं नाम दोषः । वातेन वायुना आविद्धं क्षिप्तं तेन । काशपुष्पस्य लवेन परागेणेति यावत् । "लवः कालभिदि च्छिदि । विलासे रामजे लेशे तथा किञ्जल्कपक्ष्मणोः । गोपुच्छलोमस्वपि च" इति हैमः । काशपुष्परज एव कारणं मे मुखस्य साश्रुपातत्वे इति तदाशयः । शरच्छशाङ्केत्यत्रोपमा । अनुष्टुप् छन्दः ॥ ८ ॥

अलीकोक्त्या स्वयमेव लज्जितः स्वस्मिंश्चिन्तयति—इयमिति । इयं पद्मावती बालाऽप्रौढा नवोद्वाहा नूतनपरिणीता । द्वाभ्यामाभ्यां विशेषणाभ्यां सर्वथाप्रियाचरणेऽनभिलषणीयवस्तूपपादने तस्या अनर्हत्वं प्रख्यापितम् । सत्यं, वासवदत्तास्मृतिसंभूतस्याश्रुणः कारणम् । श्रुत्वा व्यथां व्रजेत्, दुःखिता भवेत् । ( यद्यपि ) इयं काममतीव धीरस्वभावा, स्वभावतोऽचञ्चला, सत्यपि कारणबाहुल्ये चञ्चलतायाः प्रकृत्या स्थिरचित्ता । तु, किन्तु स्त्रीस्वभावः स्त्रीप्रकृतिः कातरः भीरुकः । धीरप्रकृतितया तया यद्यपि यथाकथंचित् कश्चित्कालं यावत्तद्दुःखं निगृह्येत तथापि स्त्रीस्वाभाव्यात्तदन्तःकरणे पुनरपि तत् प्रादुर्भवेदेवेति तदाशयः । अत्र पूर्वार्धे "नवोद्वाहा" "बाला" इति द्वे विशेषणे साभिप्राये, तादृशव्यथाव्यतिकरे तयोरत्युपयुक्तत्वादिति । एवं च परिकरो नामालङ्कारः । तल्लक्षणं च "अलङ्कारः परिकरः साभिप्राये विशेषणे" इति । स्त्रीस्वभावस्तु कातर इत्यनेन पूर्वोक्तस्य वस्तुनः सामान्यतया प्रतिपादनादर्थान्तरन्यासोऽपि विज्ञेयः । वृत्तमनुष्टुप् ॥ ९ ॥

---

१ देवि !

च्छिदो पीदिं उप्पादेदि । ता उट्ठेदु दाव भवं । [ उचितं तत्रभवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जनदर्शनम् । सत्कारो हि नाम सत्कारेण प्रतीष्टः प्रीतिमुत्पादयति । तदुत्तिष्ठतु तावद्भवान् । ]

राजा—बाढम् । प्रथमः कल्पः । ( उत्थाय )

गुणानां वा विशालानां सत्काराणां च नित्यशः ।
कर्तारः सुलभा लोके विज्ञातारश्च दुर्लभाः ॥ १० ॥

( निष्क्रान्ताः सर्वे । )

## चतुर्थोऽङ्कः ।

---

उइदमिति—एवमालीकोक्तिप्रसङ्गेन लब्धवैलक्ष्यं नायकमनुलक्ष्य तस्मात्प्रदेशात्पद्मावतीसंनिधानाच्च सुदूरं कुत्रापि स नेयः, एवं च कालापगमेन द्वयोरपि तत्र विषये स्वल्पमपि तावद्विस्मरणं भवेदिति कृत्वा तयोर्विश्लेषणमेव तदानीं युक्तमुत्प्रेक्षमाणो वसन्तको वक्ति उचितमित्यादि । भवन्तं, जामातरमिति यावत् । नूतनं जामातरं च पुरस्कृत्य सर्वेऽपि वधूसम्बन्धिनो जनाः स्वजनानुपयान्तीति प्रायोदर्शनम् । अपरमहः अपराह्णः । अहन्शब्दस्याह्नादेशः, "अह्नोऽह्न एतेभ्यः" ( पा० सू० ५।४।८८ ) सर्वादिभ्यः परस्य अहन्—शब्दस्याह्नादेशः स्यात्समासान्ते परे" इति । एवं च विवाहप्रसङ्गेन मगधराजस्य सुहृज्जनेभ्यः स्वीकृतः सत्कारोऽधुना तेषां सत्कारेणैव प्रतिकार्य इति कृत्वा तदर्थमेवाहूतानां परमसंबन्धिनामपराह्णकाले त्वामेव जामातरं पुरस्कृत्य दर्शनं युक्तमेव । तादृशपूजास्वीकारे च कारणं वक्ति—**सत्कार इति** । सत्कारः अन्येषु प्रयुक्तो बहुमानस्तेनैव ( पुनः ) प्रतीष्टः स्वीकृतः ( चेत् ) प्रीतिं, अर्थात् बहुमानकर्तुः प्रीतिमुत्पादयति । बहुमानदानप्रतिग्रहणादिकेनैव परस्परं जनाः प्रीतिभाजो भवन्ति नातोऽन्यथेति तदाशयः । तत्, तस्मात्कारणात् भवानुत्तिष्ठतु, समयस्य प्रत्यासन्नत्वादधुनैव गन्तुमुचितमिति ।

**बाढमिति**—बाढमित्यङ्गीकारे । तदानीं विप्रतिपत्तिशून्यो राजापि येन केनापि हेतुनात्मानं तस्मात्प्रदेशान्मोचयितुकामस्तदेवाङ्गीकरोति । प्रथमः उदारः कल्पः कार्यं, मगधराजस्य समीपं यद्गमनं तत्स्वरूपमिति । यत्खलूक्तं वसन्तकेन सत्कारः सत्कारेणेत्यादि तदनुगुणमेव सामान्यतया प्रतिपादयन्नाह—

**गुणानामिति**—कर्तारः विज्ञातार इत्युभावपि शब्दौ द्वयोः षष्ठ्यन्तयोः प्रत्येकमन्वितः । विशालानामित्यपि गुणानां सत्काराणामित्यत्र । एवं च विशालानां गुणानां कर्तारः विज्ञातारश्च; विशालानां सत्काराणां कर्तारः विज्ञातारश्चेत्यापद्यते । विशालानां महतां गुणानां शौर्यौदार्यादीनां वा । वाशब्दः समुच्चयार्थे । नित्यशोऽखण्डतया कर्तारः उत्पादयितारो जनाः इह जगति सुलभाः सुखेन लभ्याः, बहवो

दृश्यन्त इति यावत् । एवं विशालानां पृथुलानां सत्काराणामन्येषु प्रयुक्तानां पूजानां च कर्तारश्च सुलभाः । गुणेषु सत्कारेषु च प्रसक्तान्ता जना इह बहुलमुपलभ्यन्त इति भावः । तु किन्तु गुणानां विज्ञातारः "अस्मिन्देवदत्ते एते खलु गुणा विद्यन्ते तेऽस्माभिर्ग्राह्याः" इत्येवंरीत्या परगुणग्रहणपूर्वकत्वेन विचिन्तयन्तः, तथैव विशालानां सत्काराणां "अहो खल्वस्माकं भागधेयं यदेभिरेतादृशैर्वयं पूज्या भवामः" इत्येवं मनसि कुर्वाणा जना दुर्लभाः, कुत्रचिदेवोत्पद्यन्त इत्याशयः । तथा च साधूक्तिः "को जानाति गुणान् परेषु विहिताज्ज्ञानातु को वक्ति तान्, वक्तुं व्यक्तममून् कथंचिदथवा को नाम नासूयति । नैवासूयति कश्चिदेव यदि वा जायेत कस्तादृशो, यस्तैर्हृष्यति सोऽस्ति चेत् कथमसौ मर्त्येष्वहो गण्यते ॥" इति । जगतीदं प्रायोदर्शनं यत्सर्वेऽपि जना गुणेषु महान्तं प्रयत्नं कुर्वाणा दृश्यन्ते तथापि तेषां केषामपि परिमितानामेव तदनुषङ्ग्यत्यादरः । एवमेव सत्काराश्च तत्र तत्र प्रयुज्यन्ते बहुभिः, न पुनस्ते सत्कृता मनस्येवं विचिन्तयन्ति यत्सत्यमेव वयमेतादृशस्य बहुमानस्यार्हा इति । अपि च न ते कदापि तत्प्रतिकृतौ प्रयतमाना लेशेनापि कृतकृत्या भवितुं वाञ्छन्तीति । अत्र सत्कारज्ञानेन प्रस्तुतेन साकं गुणज्ञानादिकस्य चाप्रस्तुतस्य प्रकाशनाद्दीपकमलङ्कारः । तल्लक्षणं च "अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेत्" इति (सा० द०) । वृत्तमनुष्टुप् ॥ १० ॥

इति दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा विरचितायां स्वप्नवासवदत्तव्याख्यायां चतुर्थोऽङ्कः ।

# पञ्चमाङ्कस्य विषयः ।

प्रथमतः प्रवेशके इदं विज्ञातं भवति यत्पद्मावती शीर्षवेदनया दुःखितेति । कारणं तु तस्या नोक्तं किन्तु पूर्वाङ्कोक्तमाधवीलतामण्डपव्यतिकर एव प्राधान्यतस्तत्रेति न कोऽपि संदेहः । यद्यपि धीरस्वभावतया वहिरप्रकाश्य तया स्वान्त एव दुःखं तन्निगृहीतं स्यात्तथापि शीर्षवेदनाफलेन तेन स्वप्रभावोऽसूच्यतेति स्पष्टमेव । मृतायामपि वासवदत्तायां तावान्स्नेहवान्स्वभर्तेति विज्ञाय स्त्रीस्वाभाव्याद्विमूढं तस्या हृदयं तमेव विषयं पौनःपुन्येन विचिन्त्यातितरां दुःखितमभूदिति ज्ञायते । अथाविज्ञाततत्कारणः परिजनः समुद्रगृहके तद्विनोदनमुत्प्रेक्षमाणस्तत्रैव तस्याः शयनं पर्यकल्पयत् । विज्ञाततद्वृत्तो राजापि तमेव समुद्रगृहकमुद्दिश्य तस्या अनामयं वाञ्छन्सह वसन्तकेनायाति । पद्मावतीं च तत्रानागतां वीक्ष्य तस्यामेव शय्यायां तां परिपालयितुकाम उपविशति । निद्रोपहतश्च वसन्तकात् सुरसाभिः कथाभिर्विनोदमिच्छन् तं तथादिदेश । किन्तु मध्ये एव प्रसुप्तं तं ज्ञात्वा प्रावारकमानेतुं वसन्तको यावद्वहिर्गच्छति तावदेव वासवदत्तापि पद्मावतीं द्रष्टुकामा तत्रैवोपतिष्ठति । प्रौढप्रकाशाभावात्तत्र उदयनमेव पद्मावतीं मत्वा तस्यामेव शय्यायामुपविशति । अत्रान्तर उत्स्वप्नायमानं तं वीक्ष्य पद्मावतीभ्रान्तिस्तस्या निरस्ता । क्रमेण विबुध्यमानं च तं ज्ञात्वा झटित्यपसरितुकामा तस्मात्स्थानात्प्रचचाल किन्तु तस्या अस्फुटं दर्शनन्तु तस्याभवदेव । येन च स्वप्नो नु माया मतिविभ्रमो वा इति काप्यवस्था तस्य समजायत । अत्रान्तरे अरुणेः साकं योद्धुं मगधराजेन कृतं सन्नाहं काञ्चुकीय आगत्य तत्रैव तं श्रावयति ।

---

## पञ्चमाङ्के स्थल-कालयोर्निर्णयः ।

**स्थलम्**—प्रवेशके च चेट्योः संलापेनेदं ज्ञायते यत्प्रासादस्यैकस्मिन्विभागे तयोः स प्रवृत्त इति । यतः शीर्षवेदनादुःखितां पद्मावतीं वासवदत्तायै निवेदयितुमेका चेटी अपरां तां प्रार्थयते स्वयं च तद्वृत्तं वसन्तकमुखेन राजा यथा शृण्वीत तथा विधातुं वसन्तकमन्वेष्टुकामा प्रचलति । अचिरादेव तं लब्ध्वा राज्ञे तथाभूतां पद्मावतीं निवेदयितुं संप्रार्थ्य शीर्षानुलेपनाय त्वरयते । तच्चैतत्सर्वं प्रासाद एव संभवति । ततश्चाखिलस्याप्यङ्कगतस्य वस्तुनः प्रपञ्चः समुद्रगृहके प्रदर्शितः । तच्चैतत् विदूषकेण पृष्टायाश्चेट्याः "समुद्रगृहके किल शय्यास्तीर्णा" तथा विदूषकस्य च "इदं समुद्रगृहकं प्रविशतु भवान्" इत्यादिवाक्यैः सुस्पष्टं भवति । उदयनस्तथा वासवदत्तापि पद्मावतीं द्रष्टुं तत्रैवागच्छतः । तत्रैव च पूर्वमर्धप्रसुप्तस्य तस्योत्स्वापावस्थेति सर्वमवदातम् ।

**कालः**—विवाहमङ्गलस्यावशेषः सत्कारादिस्वरूपः प्रचलित एवासीदिति पूर्वाङ्कसमाप्त्यवसरे प्रतिपादितमेव । अत्र पद्मावती शीर्षवेदनया पीडिता प्रदर्शिता तत्र च कारणं प्रायः पूर्वदिने श्रुतं माधवीलतामण्डपे राज्ञो वचनमेव कारणम् । तमेवार्थं रात्रौ विचिन्त्य विचिन्त्य विनिद्रया तया भवितव्यमेवं च सर्वमुपपद्यते । विदूषकस्य "दीपप्रभावसूचितरूपः" "अतिशीतलेयं वेला" इति वचनेन पूर्वाङ्कोक्तस्य दिनस्य परस्मिन् दिने निशाप्रारम्भसमयः स आसीदिति प्रकल्प्यते । एवं च पद्मावत्याः कृते शय्याकल्पनं, शीर्षानुलेपनत्वरणं, वासवदत्तायाः राज्ञश्चागमनं तस्य चोत्स्वाप इत्यादि सर्वं वस्तुजातं तस्मिन्नेव प्रहरे संभवतीति ज्ञेयम् । निशासमयस्य च प्रामुख्यतो ज्ञानं राज्ञोऽग्रिमेण वचनेन । तच्च "मन्दानिलेन निशि या परिवर्तमाना" इति ।

---

# अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति पद्मिनिका । )

पद्मिनिका—महुअरिए ! महुअरिए ! आअच्छ दाव सिग्घं [ मधुकरिके ! मधुकरिके ! आगच्छ तावच्छीघ्रम् । ]

( प्रविश्य )

मधुकरिका—हळा ! इअह्मि । किं करियदु ? [ हला ! इयमस्मि । किं क्रियताम् ? ]

पद्मिनिका—हळा ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुक्खाविदेत्ति ? [ हला ! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति ? ]

मधुकरिका—हद्धि ! [ हा धिक् ! ]

---

## अथ पञ्चमोऽङ्कः ।

पद्मावतीस्वीकारादूर्ध्वमपि खलु वासवदत्तायां बद्धमुदयनस्य हृदयं यथापूर्वमेवासीन्न पुनरन्यस्त्रीसमागमेन प्राकृतस्येवान्यथाभूतम् । पद्मावत्यापि स नाकृष्ट इति न किन्त्वासीत्तत्र विषये सूक्ष्मतया संवेद्यः कोऽपि भेदः । एवञ्च वासवदत्तामनुलक्ष्याश्रुपातादयोऽनुभावाः पूर्वाङ्के निदर्शिताः । अधुनार्धप्रसुप्तस्योदयनस्य मुखात्तमेवार्थं सुरसतया प्रदिपादयितुं, वासवदत्तायाश्च शोको येन पुनरपि वृद्धिं प्राप्नुयात्तथा सर्वमेव घटयितुमिच्छन्कविस्तत्रोपयोगानुगौ द्वौ जनाववतारयति तत इत्यादिना, प्रविश्येत्येतेन च । ताभ्याञ्च प्रवेशकं रचयन्नसौ पूर्वाङ्ककथितेन माधवीलतामण्डपव्यतिकरेण संभूतां पद्मावत्यवस्थां प्रख्यापयति । पद्मिनिका, मधुकरिका इति पद्मावतीचेट्योर्नामधेये ।

**महुअरिए इति**—मधुकरिके इत्यत्र सम्भ्रमाद्द्विर्वचनम् ।

**हळा इअह्मीति**—इयमस्मि, आगतेति शेषः । किं क्रियताम्, किमर्थं त्वयाहमाकारिता, किं च मया कर्तव्यमिति ।

**हळा किं णेति**—शीर्षवेदनयेति—शीर्षे मस्तके या वेदना पीडा तया । यत्खलूक्तं पूर्वाङ्क उदयनेन "वासवदत्तावद्धं न तु तावन्मे मनो हरति" इत्यादि तदेव तत्र प्रायः प्रबलं कारणं विज्ञेयम् । दुःखापितेत्यपि संस्कृतं, तत्र च ण्यन्तात्कर्मणि क्तप्रत्ययः ।

**हद्धीति**—हा धिक्, शोच्यते मयैतद्विषय इत्यर्थः । अतिकष्टमिदमापतितमिति । हा धिक् शीर्षवेदनामिति वा शेषः ।

**पद्मिनिका**—हळा ! गच्छ सिग्घं । अय्यं आवन्तिअं सद्दावेहि । केवळं भट्टिदारिआए सीसवेदणं एव्व णिवेदेहि । तदो सअं एव्व आगमिस्सदि । [ हला ! गच्छ शीघ्रम् । आर्यामावन्तिकां शब्दापय । केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय । ततः स्वयमेवागमिष्यति । ]

**मधुकरिका**—हळा ! किं सा करिस्सदि ? [ हला ! किं सा करिष्यति ? ]

**पद्मिनिका**—सा हु दाणिं महुराहि कहाहि भट्टिदारिआए सीसवेदणं विणोदेदि । [ सा खल्विदानीं मधुराभिः कथाभिर्भर्तृदारिकायाः शीर्षवेदनां विनोदयति । ]

**मधुकरिका**—जुज्जइ । कहिं सअणीअं रइदं भट्टिदारिआए ? [ युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः ? ]

**पद्मिनिका**—समुद्दगिहके किळ सेज्जात्थिण्णा । गच्छ दाणिं तुवं । अहं वि भट्टिणो णिवेदणत्थं अय्यवसन्तअं अण्णेसामि ।

---

**हळा गच्छेति**—शीघ्रं गच्छेत्यनेन बलवती तस्याः शिरोवेदनाऽऽसीदिति ध्वन्यते । आवन्तिकां वासवदत्तां शब्दापयाकारय । केवलमिति—मान्यत् किञ्चिदपि "पद्मावती त्वामाह्वयति, तया चाहं विसृष्टा" इत्यादिस्वरूपं भवती तस्यै कथयिष्यतीति तदाशयः । ततः स्वयमिति—पद्मावत्याऽऽगन्तुं न विज्ञप्ताऽपि सा स्वयमेव तत्प्रेम्णा वशीकृता द्रुतमेवागमिष्यति नात्र कश्चित्सन्देह इति ।

तदागमनेन किं वा वैशिष्ट्यं संपद्येत तदेव ज्ञातुकामाऽऽह—**हळेत्यादि** ।

**सा हु इति**—मधुराभिः रम्याभिः कथाभिः, रम्या नानाविधाः कथाः कथयित्वेति । मानसशास्त्रानुकूलमेवेदमुक्तं तयेति विज्ञातव्यम् । अधुना हि मानसिकदुःखदुःखितानां ह्यामयिनां कृते तादृशा रुग्णालया निर्मीयन्ते यत्र तेषां दुःखहेतुं कथमपि विज्ञाय तत् सर्वथैव समूलघातं यथा नश्येत्, तथैव येन प्रकारेण ते स्वदुःखं विस्मरयेयुस्तथा तत्तत्सामग्रीसमवधानेन तत्रस्था हृद्रोगविदः प्रयतन्ते । तदस्या अपि शीर्षवेदना कदाचिन्मधुराभिः कथाभिरपनोदिता भवेदिति तदर्थः । रुग्णपरिचर्यायामयमेको महानुपाय इति विज्ञेयम् । विनोदयति, अंशेनापि लघूकरिष्यति ।

**जुज्जइ इति**—युज्यते उपपद्यते, यत्त्वमात्थ यत्तथैवेति । शयनीयं शय्या, रचितं परिकल्पितम् । यद्यावन्तिकेममेव प्रश्नं तां कुर्यात्तदा प्रथममेव तद्विज्ञाय गन्तव्यमिति तादृशप्रश्नस्या बीजम् । येन च वासवदत्तागमनं ... भवेदिति ।

[ समुद्रगृहके किल शय्यास्तीर्णा। गच्छेदानीं त्वम्। अहमपि भर्त्रे निवेदनार्थमार्यवसन्तकमन्विष्यामि। ]

मधुकरिका—एव्वं होदु। (निष्क्रान्ता।) [ एवं भवतु। ]

पद्मिनिका—कहिं दाणिं अय्यवसन्तअं पेक्खामि? [ कुत्रेदानीमार्यवसन्तकं पश्यामि? ]

(ततः प्रविशति विदूषकः।)

विदूषकः—अज्ज खु देवीविओअविहुरहिअअस्स तत्तहोदो वच्छराअस्स पदुमावदीपाणिग्गहणसमीरिदो अच्चन्तसुहावहे मङ्गलोसवे मदणग्गिदाहो अहिअदरं वड्ढइ। (पद्मिनिकां विलोक्य) अयि पदुमिणिआ। पदुमिणिए! किं इहं वत्तदि? [ अद्य खलु देवीवियोगविधुरहृदयस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीरितोऽत्यन्तसुखावहे मङ्गलोत्सवे मदनाग्निदाहोऽधिकतरं वर्धते। अयि पद्मिनिका। पद्मिनिके! किमिह वर्तते? ]

---

**समुद्दगिहके इति**—समुद्रवेष्टितं गृहकं समुद्रगृहकं तस्मिन्। समुद्रगृहकमिति साङ्केतिकं नाम न तु वस्तुतः समुद्रेण वेष्टितमिति। तच्चैतत्पुनरातपादिदुःखपरिहाराय जलयन्त्रादिकानां मध्येऽथवा कस्यचित्केलिसरसो मध्ये विनिर्मितं क्रीडागृहं विज्ञेयम्। यच्च जलमन्दिरादिनाम्ना तत्र तत्र कविभिरुपवर्ण्यते। तथा चोक्तं त्रिकाण्डशेषे "जलयन्त्रगृहं धीरैः समुद्रगृहमुच्यते" इति। महाकविना कालिदासेनापि मालविकाग्निमित्रे मालविकाग्निमित्रयोः सङ्गमस्तत्रैवोपवर्णित इति द्रष्टव्यम्। शय्यास्तीर्णा, शय्या परिकल्पिता। तच्चैतत्सा परम्परयाश्रौषीन्न तु तत्र विषये निःसंदिग्धाऽऽसीत्। एतच्च ज्ञायते किलशब्देन। अग्रिमेणापि राज्ञ उदयनस्य वाक्येन "अनागतया तया भवितव्यम्" इत्यनेन तदर्थं वितीर्णेन चतुर्थे पद्ये हेतुना चेदं स्पष्टं भवति यत्पद्मावती तु कदाचिद्बहुलं पीडिता सती प्रासादं विहाय समुद्रगृहकं नागमदिति। पद्मिनिकाया अनेन वचनेन पद्मावती समुद्रगृहकं विनोदनार्थं गत्वा तत्र प्रसुप्तेति नैव मन्तव्यम्।

**एव्वमिति**—एवं भवत्वित्यङ्गीकारे। यथा भवत्याह तथैवाहं करोमि। त्वमपि वसन्तकान्वेषणपरा भवेति।

**कहिं दाणिमिति**—कुत्रेत्यादिवाक्येन तदधिगमस्थाने चिन्ता तस्या व्यज्यते। साक्षादुदयनस्य निवेदनमसामयिकमुपलक्ष्य वसन्तकमुखेन कथयितुमिच्छन्त्यास्तथाभूतां पद्मावतीं तस्यास्तदन्वेषणं युक्तमेव। पश्यामीति भविष्यदर्थे।

**अज्ज खु इति**—देव्या वासवदत्ताया वियोगेन विरहेन विधुरं विकलं हृदयं

---

१ विहुरस्स (विधुरस्य)। २ किं एदं वत्तदि (किमेतद्वर्तते)।

**पद्मिनिका**—अय्य वसन्तअ ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुक्खाविदेत्ति ? [ आर्य वसन्तक ! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति ? ]

**विदूषकः**—भोदि ! सच्चं ण जाणामि । [ भवति ! सत्यं न जानामि । ]

**पद्मिनिका**—तेण हि भट्टिणो णिवेदेहि णं । जाव अहं वि सीसाणुळेवणं तुवारेमि । [ तेन हि भर्त्रे निवेदयैनाम् । यावदहमपि शीर्षानुलेपनं त्वरयामि । ]

**विदूषकः**—कहिं सअणीअं रइदं पदुमावदीए ? [ कुत्र शयनीयं रचितं पद्मावत्याः ? ]

---

यस्य तस्य । "कैवल्येऽपि च विश्लेषे विधुरं विकले त्रिषु" इति मेदिनी । विकलस्यैव वस्तुनो दाहोऽधिकः सुलभ इति भूयोदर्शनम् । तद्यथाखण्डितात्काष्ठात्तस्मादेव निर्मिताः खण्डाः सुखेन दह्यन्त इति । मदनाग्निदाहे हृदयस्य यद्विकलत्वमुपवर्णितं तदतीवोपकारकमित्यवगन्तव्यम् । एवमेवाग्रिममपि विशेषणं पद्मावतीपाणिग्रहणसमीरित इति । पद्मावत्याः पाणिग्रहणं विवाहस्तेन समीरितः सन्धुक्षितः । अग्निसन्धुक्षणे चास्ति वायोरपेक्षा । पद्मावतीपाणिग्रहणं चात्र तस्यैव स्थानेऽजायतेति विज्ञेयम् । एवञ्च सन्धुक्षितस्य तस्य दाहोऽधिकतरमेव जायत इति तु सुप्रसिद्धमेव । द्वाभ्यामाभ्यां क्रमेण वत्सराजमदनाग्निविशेषणाभ्यामुदयनहृदयस्य काप्यवस्थाऽऽसीदिति ध्वन्यते । अत्यन्तेनातिशयेन सुखावहः प्रियस्तस्मिन् मङ्गलोत्सवे विवाहमङ्गलोत्सवे । मदनस्याग्निरूपारोपाद्रूपकम् । मदनोऽग्निरेव तस्य दाहः सन्तापः । अधिकतरं वर्धते, दाहवर्धने च दह्यमानस्य हृदयस्य विकलत्वं स्वस्य च समीरितत्वं भवतः प्रबले कारणे इति विज्ञेयम् । किं कस्मात्कारणात्, इहास्मिन्स्थले वर्तते, भवतीति शेषः । अथवा किं कार्यं तदत्र विद्यते यदर्थं त्वमागतेत्यपि ।

**अय्येति**—कथनीयमेव वस्तु भङ्ग्या श्रावयति—आर्येति ।

**भोदीति**—न जानामि, न मे कथमपि ज्ञानमस्य वृत्तस्येति । किं सत्यं पद्मावती शीर्षवेदनया पीडितेति काकुरपि ।

**तेण हीति**—तेन हि, तस्माद्धेतोः । भर्त्रे उदयनाय निवेदय एनां पद्मावतीशीर्षवेदनां । शीर्षवेदनापनोदनाय अनुलेपनं शुण्ठिकादिद्रव्यस्य सार्द्रमुपदिह्यम् । त्वरयामि, शीघ्रमानयामि । अनुलिप्यतेऽनेनेति कर्मणि करणे वा ल्युट् ।

**कहिं सअणीअमिति**—अत्र तस्य जिज्ञासायाः कारणं पुनर्यदि राज्ञा पृष्टं चेत्कुत्र पद्मावतीति तदा तत्स्थाननिर्वचने सुगमं भवतीति ।

पद्मिनिका—समुद्दगिहके किळ सेज्जात्थिण्णा । [ समुद्रगृहके किल शय्यास्तीर्णा । ]

विदूषकः—गच्छदु भोदी । जाव अहं वि तत्तहोदो णिवेद्इस्सं । [ गच्छतु भवती । यावदहमपि तत्रभवते निवेदयिष्यामि । ]

( निष्क्रान्तौ । )

प्रवेशकः ।

---

( ततः प्रविशति राजा । )

राजा—

श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः ।
लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥ १ ॥

---

**समुद्दगिहके इति**—समुद्रगृहके किलेत्यादि व्याख्यातमेवाचिरात् । तत्रैव राजा प्रेषितव्य इति तस्या आशयः ।

**गच्छदु भोदीति**—तत्रभवते उदयनाय ।

प्रवेशकस्य लक्षणं तद्विस्तरश्च द्वितीयाङ्कव्याख्यायां ( ४१ पृष्ठे ) विशेषतो द्रष्टव्यः ।

**श्लाघ्यामिति**—कालक्रमेण वासवदत्तोपरमादूर्ध्वं गच्छता कालेन पुनः आगतः दाराणां भार्याया भारो यस्य तथाभूतोऽहं । ज्ञायते च तद्द्वितीयोद्वाहस्तेन पद्मावत्या साकं कृतः स सर्वथैव न मनसा प्रेरितेन तेनेति भारशब्दसंप्रयोगात् । कार्यवशान्मयाऽसौ परिणीता सा भारभूतैव न पुनः सुखहेतुरिति ध्वनिः । हिमेन हतां, तुहिनेनाक्रान्तां पद्मिनीमिव कमलिनीमिव । सुकुमाराङ्गी स्त्री दुःखेनोपहता हिमाक्रान्तपद्मिन्योपमीयते तत्र तत्र काव्ये । तथाहि रघुवंशे—"हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता ॥" इति । मेघदूते च—"जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्" इति । प्रकृत्या सुकुमारायास्तस्यास्तदा सैवावस्थाभविष्यद्या च हिमहतायाः पद्मिन्या दृश्यत इति तदाशयः । लावाणके तदाख्यग्रामे हुतवहेनाग्निना, हृता नाशिता अङ्गयष्टिर्यस्यास्ताम् । अङ्गं यष्टिरिवेत्युपमानोत्तरकर्मधारयः समासः । तेन च कृशाङ्गीं तामित्यपि ध्वन्यते । श्लाघ्यां स्तुत्यां, अत्र श्लाघायां हेतुश्च प्रायस्तस्या वीणावादनादिकर्मसु कौशल्यं तदादिरन्यो गुणगणो वेति मन्तव्यम् । अवन्तीनां नृपतिः प्रद्योतस्तस्य सदृशीं, स्वगुणैः पितुरनुगामिनीमिति यावत्, तनूजां तनयां, तां वासवदत्ताम् । अवन्तिनृपतेस्तनूजामित्यनेनैव निर्वाहे पुनरपि तच्छब्दप्रयोगे-

( प्रविश्य )

**विदूषकः**—तुवरदु तुवरदु दाव भवं । [ त्वरतां त्वरतां तावद्भवान् । ]

**राजा**—किमर्थम् ?

**विदूषकः**—तत्तहोदी पदुमावदी सीसवेदणाए दुक्खाविदा । [ तत्रभवती पद्मावती शीर्षवेदनया दुःखिता । ]

**राजा**—कैवमाह ?

**विदूषकः**—पदुमिणिआए कहिदं । [ पद्मिनिकया कथितम् । ]

**राजा**—भोः ! कष्टं,—

रूपश्रिया समुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।

---

नानुभूतपूर्वां स्वहृदयैकार्पितसर्वस्वामिति ध्वन्यते । तथा चाह विश्वनाथः—"तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम्" इति । तत्र चोदाहरणं—"तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि" इति । तामनुभूतपूर्वां, तथैवेहापीति विज्ञेयम् । तां, या मया पुरानुभूता तामिति । चिन्तयामि, स्मरणविषयं करोमीति । अत्र द्वितीयोद्वाहप्रसङ्गेन प्रथमपत्न्या विस्मरणस्य सामग्र्यां सत्यामपि न तदिति कारणसामग्रीसमवधाने कार्यस्यानुपादानाद्विशेषोक्तिः । तल्लक्षणञ्च—"सति हेतौ फलाभावे विशेषोक्तिः" इति ( सा० द० ) । वृत्तं वसन्ततिलका ॥ १ ॥

**तुवरदु इति**—संभ्रमाद्द्विर्वचनम् । तेन च कालातिपातासहत्वं व्यज्यते ।

**किमर्थमिति**—किमर्थं मया त्वरा कार्येति शेषः । किं तत्रैतादृशं प्रबलं कारणं येन खल्वहं त्वयैवं त्वरयाऽऽहूये इति तदाशयः ।

**तत्तहोदी इति**—पद्मिनिकया कथितस्य वृत्तस्य प्रख्यापनं तत्रभवतीत्यादि । तत्रैव सन्निधापयितुं पुनरहं त्वां त्वरयामीति भावः ।

**कैवमिति**—काचिच्चेटी त्वामेवमाह, अथवा स्वयं पद्मावत्या त्वं पुनरादिष्टोऽस्मिन्संदेशे इति जिज्ञासायां तथाभूतः स्त्रीत्वनिर्देशपूर्वकः प्रश्नः ।

**पदुमिणिआए इति**—पद्मिनिकया, तनाम्न्या चेट्या कथितं, एतद्वृत्तमिति शेषः ।

**भोः कष्टमिति**—अनुभूतदुःखस्य तस्य पुनरप्यनभिमतवृत्तश्रवणेन तथाभूत उद्गारः ।

**रूपश्रियेति**—रूपस्य श्रीः शोभा तया समुदितां युक्तां, अलौकिकसौन्दर्यशालिनीमिति यावत् । पूर्वार्द्धेऽपि तत्सौन्दर्यमनुलक्ष्योक्तं तेन स्मर्तव्यं "पद्मावती

पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥ २ ॥

अथ कस्मिन् देशे वर्तते पद्मावती ?

विदूषकः—समुद्दगिहके किळ सेज्जात्थिणा । [ समुद्रगृहके किल शय्यास्तीर्णा । ]

राजा—तेन हि तस्य मार्गमादेशय ।

विदूषकः—एदु एदु भवं । [ एत्वेतु भवान् । ]

( उभौ परिक्रामतः । )

विदूषकः—इदं समुद्दगिहकं । पविसदु भवं । [ इदं समुद्रगृहकम् । प्रविशतु भवान् । ]

---

बहुमता मम यद्यपि रूपशीलमाधुर्यैः" इति । गुणतश्च गुणैरिति, युक्तां माधुर्यादिगुणसम्पन्नां प्रियां पद्मावतीं लब्ध्वा, पत्नीत्वेनाङ्गीकृत्य । पूर्वेण पुरा संभूतेन अभिघातेन वासवदत्तामृत्युस्वरूपेणानर्थेन सरुक् रुजा सहितः, इदानीमप्यनुभूयमानतद्व्यथस्य मम अद्य शोकः मन्द इव, सामान्यतो मन्दीभूतो न तु सर्वथैव नष्टः स इति । एतस्यामवस्थायां पुनः पद्मावतीशीर्षवेदनावृत्तं श्रुत्वाऽन्यत्किमप्यनिष्टमापतेदिति शङ्कया व्याकुलोऽहं संवृत्त इत्याशयेनाह अनुभूतदुःख इत्यादि । अनुभूतं दुःखं वासवदत्तादाहस्वरूपं येन तादृशोऽहं पद्मावतीमपि । अपिशब्दो वासवदत्तासंग्राहकः । यस्याः खलु त्वयाऽधुनैव शीर्षवेदनादुःखेनानवस्था मे कथिता तां पद्मावतीमपि तथैव हिमहतां पद्मिनीमिव समर्थयामि । सापि सुकुमाराङ्गी दुःखेनोपहता मया तुहिनाक्रान्तकमलिनीव विशीर्णावयवा विलुप्तकान्तिः समुत्प्रेक्ष्यते इति तदाशयः । तथैवेत्यत्र तथैव वासवदत्ता इवेत्यनेन यथा वासवदत्ता मृता तथैवेयमपि मरिष्यतीत्यादिव्याख्यानमस्वरसवहं विज्ञेयम् । वसन्ततिलकावृत्तम् ॥ २ ॥

अथ कस्मिन्नित्यादि पद्मावतीनिवासस्थानपरिज्ञानाय पृच्छावचनम् ।

**समुद्दगिहके इति**—यत्खलु पद्मिनिकया कथितं तदेवानुवदति समुद्रगृहके इत्यादिना ।

**तेन हीति**—तेन हि, तस्मात्कारणात्, यद्येवं तदेत्यपि वा । आदेशय दर्शय । मार्गादेशनस्य स्वरूपन्तु ज्ञायतेऽग्रिमेण विदूषकस्य वचनेन एतु, एत्वित्यादिना । एतद्धि परिचरादिभिर्नाट्ये आचरणीयं बहुलं तत्र तत्रोपलभ्यते ।

**एद्विति**—अनेन मार्गेणेति शेषः । एतादृशञ्च वचनं केवलं समुदाचारसंभिन्नमेवेत्यवगन्तव्यम् । परिक्रामतः, परिक्रमणञ्च समुद्रगृहकमुद्दिश्य गमनम् ।

**इदमिति**—इदमिति हस्तेन निर्देशः । ज्ञातस्यापि पुनर्निर्वचनं पूर्वोक्तान्नाट्यप्रसङ्गान्नातिभिद्यत इति ज्ञेयम् ।

राजा—पूर्वं प्रविश ।

विदूषकः—भो ! तह । ( प्रविश्य ) अविहा चिट्ठदु चिट्ठदु दाव भवं । [ भोः ! तथा । अविहा तिष्ठतु तिष्ठतु तावद्भवान् । ]

राजा—किमर्थम् ?

विदूषकः—एसो खु दीवप्पभावसूइदरूवो वसुधातळे परिवत्तमाणो अअं काओदरो । [ एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानोऽयं काकोदरः । ]

राजा—( प्रविश्यावलोक्य सस्मितम् ) अहो सर्पव्यक्तिर्वैधेयस्य !

ऋज्वायतां हि मुखतोरणलोलमालां
भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख ! सर्पम् ।
मन्दानिलेन निशि या परिवर्तमाना
किञ्चित्करोति भुजगस्य विचेष्टितानि ॥ ३ ॥

---

विदूषकमेव पूर्वं प्रवेष्टुमादिशति—**पूर्वमित्यादिना ।**

**भो इति**—तथा, यथा भवानाह तथा करोमीति । प्रविश्य, प्रवेष्टुं कानिचित्पदानि गत्वेति तदर्थः, न ल्यन्तः प्रविश्येति ।

**किमर्थमिति**—गमननिरोधे किं कारणमिति तदर्थं पृच्छावचनम् ।

**एसो खु इति**—दीपस्य प्रभया तेजसा अवसूचितं रूपमाकृतिः यस्य सः । अनेन च तत्र समुद्रगृहे मन्द एव दीपप्रकाश आसीदिति ज्ञायते । तच्चोचितमेव । प्रौढप्रकाशवत्त्वं च शीर्षवेदनापीडितायाः पद्मावत्याः कृते परिकल्पितस्य तत्स्थलस्य विरुद्धमेव । स च परिह्रियते प्रायशः सर्वैस्तत्र यत्र रुग्णस्य शय्या परिकल्प्यते । अपि च यतः खलु तोरणमालायां सर्पस्य भ्रान्तिस्तस्योत्पन्ना ततो ज्ञायते तत्तथैवेति । अन्यथा सर्पभ्रान्त्यनुपपत्तेः । एष खल्वित्यादिनोपक्रान्तस्य वचनस्य परिसमाप्त्यभावे पुनरपि तत्रैवायमित्यादिना यः खलूपक्रमः कृतस्तेन ज्ञायते यत्प्रथमतस्तस्य तोरणमालायां जन्तुसामान्यभ्रान्तिस्ततः क्रमेण विशेषतः सर्पस्येति सूक्ष्मया दृष्ट्या द्रष्टव्यम् । काकोदरः सर्पः "कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी" इत्यमरः । काकस्येवोदरमस्य । यद्वा—ईषदकति । 'अक कुटिलायां गतौ' ( भ्वा० प० से० ) । 'ईषदर्थे च' ( पा० सू० ६।३।१०५ ) कोः कादेशः काकम्—ईषत्कुटिलगतिमद्—उदरमस्येति अमरकोशटीकासु ।

**अहो इति**—सर्प इति व्यक्तिर्ज्ञानम् । असत्यपि सर्पे तोरणमालायां सर्पबुद्धिं गृह्णतो मन्दबुद्धेर्वसन्तकस्य तादृशमाटोपं ज्ञात्वा युक्तमेव वदति वैधेयस्येति ।

**ऋज्वायतामिति**—हे मूर्ख ! त्वं हि, ऋजुः सरला चासौ आयता दीर्घा च ताम् । अनेन च सर्पभ्रान्तिप्रयोजिका सामग्री प्रतिपादिता । क्षितौ भूमौ

विदूषकः—( निरूप्य ) सुट्ठु भवं भणादि । ण हु अअं काओदरो । ( प्रविश्यावलोक्य ) तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे । [ सुष्ठु भवान् भणति । न खल्वयं काकोदरः । तत्रभवती पद्मावतीहागत्य निर्गता भवेत् । ]

राजा—वयस्य ! अनागतया भवितव्यम् ।

विदूषकः—कहं भवं जाणादि ? [ कथं भवान् जानाति ? ]

राजा—किमत्र ज्ञेयम् । पश्य,—

शय्या नावनता तथास्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।

---

अर्थां, दृढबन्धनाभावादधःप्रदेशे पतिताम् । मुखे प्रवेशस्थाने यत्तोरणं द्वारभागः ( इन्द्रधनुराकारः प्रायो निर्मीयतेऽसौ ) तस्मिन् लोला लम्बमाना या माला ताम् । सर्पमवगच्छसि । "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः । सर्पभ्रान्तौ नेदमेव प्रयोजकं किन्त्वन्यदप्यस्तीत्याह—मन्दानिलेनेत्यादि । या माला निशि रात्रौ मन्देन अनिलेन वायुना परिवर्तमाना विवर्तमाना सती भुजगस्य सर्पस्य विचेष्टितानि भुजगसामान्यानि विवलनादीनि किञ्चिल्लेशेन करोति । वायुना प्रेरितायामस्यां विवर्तमानत्वं न तु पुनः स्वयंकृतं तदिति तदभिप्रायः । तां मालां हे मूर्ख ! इति पूर्वार्धेऽन्वयोऽवगन्तव्यः । अत्र विदूषकस्योपस्थितायां सर्पशङ्कायां राज्ञा तद्वारणं कृतमिति भ्रान्तापह्नुतिरलङ्कारो ज्ञेयः । तथा चोक्तम् "भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे" इति । वसन्ततिलकावृत्तमिदम् ॥ ३ ॥

**सुट्ठु इति**—निरूप्य, समीपं गत्वा सम्यगवलोक्य । सुष्ठुभवानिति—यत्त्वमाह तत्तथैवेति, सत्यं मालैवेयं न पुनः सर्प इति । तत्रभवतीत्याद्यनुमानं सर्वथा लिङ्गादर्शनेनैव अपि च केवलं पद्मिनिकया कथिताद्वाक्यात् "समुद्रगृहके किल शय्यास्तीर्णा । शीर्षानुलेपनं त्वरयामि" इति स्वरूपात् तथागृहीतार्थस्य तस्येति विज्ञेयम् । पद्मिनिकया कथितं यत्पद्मावती समुद्रगृहके वर्तत इति सा चात्र न दृश्यतेऽतो निर्गतेति तस्यानुमानम् ।

**वयस्येति** । अनागतयेति—नैव खलु सात्रागतेति मया तर्क्यत इति तदभिप्रायः । तत्र हेत्ववतारश्च विदूषकेण पृष्टस्य तस्याग्रिमे पद्ये "शय्या नावनता" इत्यादौ ।

**कहमिति**—कथं भवान् जानाति, कोऽत्र हेतुर्येन त्वयेत्थमनुमितमिति ।

**किमत्रेति**—अत्र तदनागमनविषये, किं ज्ञेयम्, तत्तथासुलभं नेति तदर्थः, अपि च स्पष्टमेवाखिलमिति । पश्येति दीयमानेषु हेतुषून्मुखीकरणाय ।

**शय्या नावनतेति**—हि यस्माद्धेतोः, शय्या, पद्मावत्याः कृते परिकल्पिता । न अवनता तच्छरीरार्पणेन न क्वचिदपि निम्नीभूता । तथा आस्तृता चासौ समा

रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित्कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥४॥

---

च, आस्तृतस्यास्य शयनीयस्य सैवावस्था दृश्यते यया खलु न कोऽपि शयित्वोत्थित इति सुनिश्चितमाभाति। न पुनः कुत्रचिदपि विवलनादिकेन तस्या विषमत्वं समुत्पादितमिति। न व्याकुलः अङ्गेषु परिवर्तनादिकेन विसंस्थुलीकृतः प्रच्छदः प्रच्छदनपटो यस्याः सा तथाभूतापि न संदृश्यत इति। शयित्वोत्थितस्य जनस्य शय्यायां पुनः प्रच्छदनपटादिकस्याङ्गवलनादिना वैषम्यं भवति तदत्र नेत्येको हेतुः। अत्र चत्वारो हेतवो वितीर्णास्तेन तत्प्रतिपादनार्थम्। द्वितीयश्च द्वितीये पादे, तृतीयश्च तृतीये, चतुर्थः पुनश्चतुर्थे इति क्रमेण विज्ञेयाः। अमलं स्वच्छं शिरोपधानं शिरस्य मस्तकस्य उपधानं उपबर्हं, न तु शिरसः उपधानमिति। अत्र 'शिर' इत्यदन्तः शब्दो मस्तकवाची न तु शिरस्। अन्यथा शिरोपधानमिति स्थले शिरउपधानमित्यभविष्यदिति द्रष्टव्यम्। तथा चोक्तममरकोशटीकासु "शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा" इति। उपधानं च तद्यत्र शयितेन केनचिच्छय्यायां स्वमस्तकमुपधीयते। "उपधानं तूपबर्हः" इत्यमरः। शीर्षस्य अभिघातः पीडा तदर्थं तदपनोदनाय वा लिप्तैरौषधैर्लेपनविशेषैः। न क्लिष्टं न लाञ्छितं, संदूषितमिति यावत्। मस्तके लिप्तमनुलेपनं विवलने कदाचिदुपधानं दूषयति तदेतन्न दृश्यत इति तदाशयः। रोगे, इह चासौ शीर्षवेदनास्वरूपः तस्मिन् सति। दृष्टेरक्ष्णोः विलोभनमाकर्षणं जनयितुमुत्पादयितुम्। अक्ष्णोराकर्षणद्वारा मनसोऽपि प्रीतिमुत्पादयितुमिति भावः। काचित् शोभा, रम्यवस्तुसमवधानेन शय्यां परितस्तेषां परिकल्पनेनापादिता सा, न कृता न सन्निधापिता। ज्ञातव्यमिदं यदयमप्येको महानुपायो हृद्रोगपीडितस्य व्यथापनोदनायाचरितेषु तेषु। अधुना हि तत्र तत्र रुग्णालयेषु मानसिकेन शारीरिकेण वा दुःखेनोपहतानामामयिनां शय्यां परितश्चित्रालेख्यादीन् भित्तौ विरचय्य तदक्ष्णोः प्रीतिमुत्पादयन्तस्तानचिरादेव रोगविमुक्तान् कुर्वन्ति तत्रस्थाः कार्यवाहका इति दृष्टचरम्। एषैव संरणिः पुरा अपि आसीदित्यनेन प्रकल्प्यते। मधुराभिः कथाभिरपि विनोदनं रुग्णपरिचर्यायामतीवोपकारकमित्यचिरादेवोक्तम्। तथैवेदमप्यवगन्तव्यम्। अक्ष्णोः प्रीतिमुत्पादयन्त आलेख्यादयः पदार्थाः क्रमेणाविज्ञातं मनस्यपि स्वप्रभावं सूचयन्ति। भवत्विदं यत्किमपि परन्तु पीडितस्य शय्यास्थितस्य जनस्यैकं स्थानं विहायान्यत्र गमनं नैव संभवतीत्याशयेनाह—प्राणी प्राप्येत्यादि। प्राणी यः कोऽपि शरीरी। रुजा रोगेण, हेत्वर्थे तृतीया। शयनं शय्यां प्राप्याधिगम्य शीघ्रं स्वयं न मुञ्चति, चिरं तत्राधिशयान एवावतिष्ठत इति। रुग्णस्य सहसा शय्यात्यागः प्रियो नैव भवति, तत्रैव तस्याभिरुचिर्बहुलं दृश्यत इति हेतोस्तस्या अपीतो गमनमसंभवव्याप्तमेवेति तदाशयः। रुजमित्यपि पाठः, तत्र रुजं प्राप्य शयनं न मुञ्चतीति सारल्येनान्वयो युक्त एवाभाति। एवञ्च प्रतिपादितैश्चतुर्भिरपि हेतुभिस्तस्या अत्रागमनमेव नाभूदिति स्पष्टमेव सर्वमिति। शार्दूलविक्रीडितं वृत्तमिदम्॥ ४॥

**विदूषकः**—तेण हि इमिस्सिं सय्याए मुहुत्तअं उववििसअ तत्तहोदिं पडिवाळेदु भवं । [ तेन ह्यस्यां शय्यायां मुहूर्तकमुपविश्य तत्रभवतीं प्रतिपालयतु भवान् । ]

**राजा**—वाढम् । ( उपविश्य ) वयस्य ! निद्रा मां बाधते । कथ्यतां काचित् कथा ।

**विदूषकः**—अहं कहइस्सं । हो ँ त्ति करेदु अत्तभवं । [ अहं कथयिष्यामि । हो ँ इति करोत्वत्रभवान् । ]

**राजा**—वाढम्[2] ।

**विदूषकः**—अत्थि णगरी उज्जइणी णाम । तहिं अहिअरमणीआणि उदअह्णाणाणि[3] वत्तन्ति किळ । [ अस्ति नगर्युज्जयिनी नाम । तत्राधिकरमणीयान्युदकस्नानानि वर्तन्ते किल । ]

---

**तेण हीति**—तेन हि, तस्माद्धेतोः, यस्मात्त्वं कथयसि नागतात्र सा तस्मादिति । मुहूर्तकं प्रतिपालयत्वित्यत्र "कालाध्वनोरत्यन्तसंयोगे" ( पा० सू० २।३।५ ॥ ) इति द्वितीया । मुहूर्तश्च द्वादशक्षणात्मकः कालः प्रसिद्ध एव । "ताः ( कलाः ) तु त्रिंशत्क्षणः । ते तु मुहूर्तो द्वादशास्त्रियाम्" इत्यमरः ।

**वाढमिति**—वाढमित्यङ्गीकारे । तस्या अनामयत्वज्ञानायात्र तत्परिपालनमेव श्रेय इति तदाशयः । निद्रा मां बाधते, प्रभवतीत्यर्थः । कथाश्रवणे च प्रवृत्तिस्तस्य निद्राप्रभावमपहन्तुमिति ज्ञेयम् ।

**अहमिति**—हो ँ इति अनुनासिकेन युक्तेन होकारेण ज्ञातं मया, श्रूयते मयेत्यर्थकः क्रियमाणः शब्दविशेषः । कस्मिंश्चित्प्रवृत्ते कथाकथने श्रोता तत्र स्वावधानं सूचयंस्तथाविधं ध्वनिविशेषं मध्ये मध्ये करोतीति सर्वजनीनमेव । प्रवृत्तमात्रे मयि तत्र त्वं यदि निद्रितः स्यात्तदा सर्वथा विफलो मे परिश्रमो भूयादिति तदाशयः ।

**वाढमिति**—वाढम्, सत्यमेवाहं हो ँ इति करोमि भवांस्तु स्वैरं कथयत्वित्यभिप्रायः ।

**अत्थीति**—अत्थीति कथाप्रारम्भः । अधिकमतिशयेन रमणीयान्याह्लादोत्पादकानि । उदकस्नानानि सलिलावगाहाः, स्नानार्थं निर्मितान्यनेकानि सुलभावताराणि तीर्थानि वा । कथाप्रारम्भेण तु ज्ञायत इदं यत्स किमपि भूतपूर्वां महत्त्वविशिष्टामाख्यायिकां कथयितुं प्रवृत्त इति, परञ्चोदकस्नानतीर्थादिकस्य नात्युपयुक्तस्य प्रथमत एव तथा साटोपं स्वस्य हास्यकारित्वानुगुणेन वर्णनेन स्वमौर्ख्यं प्रकटय्य जनस्य हास्यतां व्रजतीति विज्ञेयम् ।

---

१ होन्ति ( हुंकृतिम् ) । २ छन्दतः । ३ उदअण्हाणाणि ( उदयस्नानानि ) ।

**राजा**—कथमुज्जयिनी नाम !

**विदूषकः**—जइ अणभिप्पेदा एसा कहा, अण्णं कहइस्सं । [ यद्यनभिप्रेतैषा कथा, अन्यां कथयिष्यामि । ]

**राजा**—वयस्य ! न खलु नाभिप्रेतैषा कथा । किन्तु,—

स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृत्तं[१] नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥ ५ ॥

---

**कथमिति**—उज्जयिनीशब्दश्रवणादेव तद्गतमखिलं वस्तुजातं तस्य स्मृतिपटमधिगम्य तं दुःखाकुलं वितनोति । एतच्च ज्ञायते कथं—शब्देन ।

**जइ इति**—अनभिप्रेता असम्मता । एषा उज्जयिनीसम्बद्धा कथा ।

**वयस्येति**—न खलु नाभिप्रेता, अभिप्रेतैवेति । द्वौ नञौ प्रकृतिदार्ढ्यं गमयत इति न्यायेन प्रस्तुतप्रकृतेरभिप्रेतत्वस्वरूपाया दृढता विज्ञेया । कथाया अभिप्रेतत्वे हेतुश्चोज्जयिनीनिवासप्रसङ्गेन वासवदत्तायाः सहवासः प्रमुखतो विज्ञेयः । इदानीमनभिप्रेतत्वे च तद्वियोग एवेति । प्रस्तुतायां च कथायां वासवदत्तास्मृतिसंतानः पुनर्दुःखं नवीकृत्य सन्तापं वर्धयेदेवेति हृदयम् ।

**स्मरामीति**—प्रस्थानकाले, प्रस्थानस्य गमनस्य कालस्तस्मिन्; यदाहं वासवदत्तया सहोज्जयिन्याः कौशाम्बीं प्रति प्रस्थितस्तदा । उदयनबद्धमानसा वासवदत्ता तेन सह संमन्त्र्योज्जयिनीतो यथा तेनैव साकं प्रस्थानमकरोत्तत्सर्वमपि प्रतिज्ञानाटिकायां सुस्पष्टतया प्रतिपादितम् । स्वजनं स्वबान्धवान्मातापितरौ च स्मरन्त्याः । यद्यपि गन्तुं कृतमानसाऽपि साऽऽसीत्तथापि चिरसहवासस्य दुर्लंघ्यतया तेषां तत्तस्याः स्मरणमुचितमेव । प्रवृत्तमुद्गतं, नयनयोः अन्तेऽपाङ्गे लग्नमवसक्तं बाष्पमश्रु । स्नेहात् प्रेम्णः, स्नेहश्च पितृबान्धवादिविषयक एव हेतुर्बाष्पोद्गम इति विज्ञेयम् । मम एव उरसि पातयन्त्याः, ज्ञायतेऽनेन यदनन्यगतिकतया मातापितरौ स्मरन्ती सा स्वप्रियस्योदयनस्योरःस्थले मस्तकं निधाय तद्बाहुपाशनिगडितैव भृशमश्रूणि मुमोचेति । अवन्त्याः अधिपतिस्तस्येत्यार्षः प्रयोगः । कृते च समासे अवन्त्यधिपतिरिति भवेन्न पुनरवन्त्याधिपतिरिति । अवन्त्याः अधिपतिरित्यत्र प्रथमे सन्धौ लुप्ते विसर्गे पुनरपि कृते सन्धिकार्ये अवन्त्याधिपतिरिति सुगमं भवति । अपाणिनीया अपि दृश्यन्ते केचित्प्राचीनानां प्रयोगाः । महाभारते च "द्वेवापि नूनमऋतं वदन्ति" इत्यत्र द्विः संधिकार्यं कृत्वैव निर्वाहः कार्यः । एवञ्चास्य कवेरप्येतादृशैः प्रयोगैः प्राचीनत्वस्य प्रकल्पने न कोऽपि दोष इत्यवगन्तव्यम् ।

---

१ प्रवृद्धम् ।

अपि च,

वहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥ ६ ॥

**विदूषकः**—भोदु, अण्णं कहइस्सं । अत्थि णगरं वह्मदत्तं णाम । तहिं किळ राआ कंपिळ्ळो णाम । [ भवतु, अन्यां कथयिष्यामि । अस्ति नगरं ब्रह्मदत्तं नाम । तत्र किल राजा काम्पिल्यो नाम । ]

---

अथवा अवन्त्या हेतुना, अधिपतिः । तस्य प्रद्योतस्याधिपतित्वे अवन्तीदेशो हेतुरित्यप्यवगन्तव्यम् । गृहेण स्वामी देवदत्तः इत्यत्र देवदत्तस्य स्वामित्वे गृहं यथा हेतुस्तथैवात्रापीति विज्ञेयम् । अधिपतिस्तु अर्थानुसंधानादवन्त्या इत्यायात्येव । सुतायाः स्मरामि, सुतामित्यर्थः "अधीगर्थदयेशां कर्मणि" ( पा० सू० २।३।५२ ) इति कर्मणि शेषे षष्ठी विज्ञेया । इयमुपजातिः । तल्लक्षणञ्च—"स्यादिन्द्रवज्रा यदि तौ जगौ गः । उपेन्द्रवज्रा जतजास्ततो गौ ॥ अनन्तरोदीरितलक्ष्मभाजौ । पादौ यदीयावुपजातयस्ताः ॥" इति । सा चेयमुपजातिरिन्द्रवज्रोपेन्द्रवज्रासंमिश्रिता ॥ ५ ॥

अन्यं च नैकवारं समनुभूतं हृद्यं प्रसङ्गं झटिति स्मृतिपथमवतीर्णं तस्मै श्रावयति—**वहुश** इत्यादिना । उपदेशेषु; उपदेशश्च शिक्षा, सा च वीणावादनाध्यापनसमये दीयमाना मया । उपदेशेष्विति वहुवचनेन नैकस्मिन्नेव समये किन्तु वहुषु तेष्वित्यवगन्तव्यम् । मां ईक्षमाणया, मत्कृतमुपदेशं मनसि न कृत्वा मन्मुखे वद्धदृष्ट्या तया । उदयनस्य सौन्दर्येण विमुग्धाया वासवदत्तायाः समीपे शिष्योचितस्य समुदाचारस्य विदूरैव कथाऽऽसीदिति स्पष्टतया विज्ञायतेऽनेन । स्रस्तः हस्ताद्गलितः कोणः वीणावादने उपयुज्यमानो धनुराकारः साधनविशेषो यस्मात्तेन । "कोणो वीणादिवादनम्" इत्यमरः । मन्मुखं सविशेषमीक्षमाणायास्तस्या हस्ते कोणो योग्यस्थानपरिभ्रष्टोऽजायत, एवञ्च व्यस्तकोणमेव हस्तं यथापूर्वं चालयन्ती साऽनवधाना बभूवेत्यभिप्रायः । तथाभूतेन हस्तेन, आकाशे वादितं कृतं, कोणस्य व्यस्ततया तस्या अनवधानतया च स यथार्हं न तन्त्रीष्वचलत् किन्तु शून्य एवाकाशे तन्त्रीभ्यः सुदूरमेवेति भावः । तस्याश्चावन्त्या अधिपतेः सुतायाः स्मरामीति पूर्वश्लोकेनान्वयः । एतेन तदानींतन उदयनगतरतिविषयको वासवदत्ताया अनुभावः सम्यक्तया प्रदर्शित इति विज्ञेयम् । वृत्तमनुष्टुप् ॥ ६ ॥

**भोदु इति**—भवतु, अस्तु तावत्, अलमनया कथया यदि ते संत्रासः समुत्पद्यते तच्छ्रवणेनेति । अस्ति नगरमित्यादिना पुनरपि मौर्ख्यस्य प्रदर्शनं, ब्रह्मदत्ताख्यस्य नगरस्याप्रसिद्धत्वात् । ब्रह्मदत्तेति पुरुषस्य नाम भवितुमर्हति न पुनर्नगरस्य । काम्पिल्यमिति नगरस्य न पुनर्नृपतेरिति तस्य मूर्खत्वारोपे वीजम् ।

राजा—किमिति किमिति ?

विदूषकः—( पुनस्तदेव पठति । )

राजा—मूर्ख ! राजा ब्रह्मदत्तः, नगरं काम्पिल्यमित्यभिधीयताम् ।

विदूषकः—किं राआ बह्मदत्तो, णअरं कंपिळ्ळं ? [ किं राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् ? ]

राजा—एवमेतत् ।

विदूषकः—तेण[1] हि मुहुत्तअं पडिवाळेदु भवं, जाव ओट्ठगअं करिस्सं । राआ बह्मदत्तो, णगरं कंपिळ्ळं । ( इति बहुशस्तदेव पठित्वा[2] ) इदाणिं सुणादु भवं । अयि सुत्तो अत्तभवं ।[3] अदिसीदळा इअं वेळा । अत्तणो पावरअं गह्णिअ आअमिस्सं । ( निष्क्रान्तः । ) [ तेन हि मुहूर्तकं प्रतिपालयतु भवान्, यावदोष्ठगतं करिष्यामि । राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् । इदानीं शृणोतु भवान् । अयि सुप्तोऽत्रभवान् । अतिशीतलेयं वेला । आत्मनः प्रावारकं गृहीत्वागमिष्यामि । ]

---

पुरा खलु ब्रह्मदत्तो नाम पाञ्चालानां राजा बभूवेति प्रसिद्धिः । काम्पिल्याख्यं नगरञ्च तेषां राजधानीत्यपि सुप्रसिद्धमेव ।

**किमितीति**—किमितीत्यत्र द्विर्वचनं सम्भ्रमात् । स च विदूषकस्य तत्र विषये विद्यमानस्य ज्ञानस्य परीक्षणार्थम् । तच्च पुनर्व्यत्यासपूर्वकमिदं वचनमविज्ञातं तस्य मुखाद्विनिर्गतमथवाज्ञानत एव तेनोच्चारितमिति जिज्ञासायां विज्ञेयम् । किमुक्तं त्वया पुनरपि भणेत्याशयः ।

**पुनरिति**—तदेव "अत्थि णगरं बह्मदत्तं" इत्यादि पुनस्तथैव पठति । वस्तुस्वरूपस्याज्ञानत एव तेन वाक्यमिदमुच्चार्यत इत्यवधार्य वाक्यस्य यथार्थं स्वरूपं दर्शयति—मूर्खेत्यादिना ।

**किं राआ इति**—स्वप्रमादं ज्ञात्वा राज्ञा कथितस्य पुनस्तद्वाक्यस्य स्वमुखोद्गतत्वेनानुवादमिष्टं मन्वानः प्रश्नस्वरूपेण तथाऽऽह ।

**एवमिति**—एवमेतत्, यत्त्वयोक्तमधुना तत्तथैवेति ।

**तेण हीति**—तेन हि, तस्मात्कारणात् । भवान् मुहूर्तकं प्रतिपालयतु प्रतीक्षताम् । कालात्यन्तसंयोगे द्वितीया । अवशिष्टस्य कथाभागस्य श्रवणार्थमिति

---

१ जइ एव्वं ( यद्येवम् ) । २ पठति । ३ इमू ।

( ततः प्रविशति वासवदत्ता आवन्तिकावेषेण चेटी च । )

चेटी—एदु[1] एदु अय्या । दिढं खु भट्टिदारिआ[2] सीसवेदणाए दुक्खाविदा । [ एत्वेत्वार्या । दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखिता । ]

वासवदत्ता—हद्धि, कहिं सअणीअं रइदं पदुमावदीए ? [ हा धिक्, कुत्र शयनीयं रचितं पद्मावत्याः ? ]

चेटी—समुद्दगिहके किळ सेज्जात्थिण्णा । [ समुद्रगृहके किल शय्यास्तीर्णा । ]

---

शेषः । यावत्, तेनैव मुहूर्तमात्रेण कालेन, अहं ओष्ठगतं मुखोद्गतं करिष्यामि । प्राथमिकावस्थायां पाठशालास्था बालका इष्टस्य वाक्यस्य पौनःपुन्येनोच्चारणेन मुखोद्गतं तत्कर्तुमभ्यस्यन्तीति सुप्रसिद्धमेव । प्रौढस्य पुनरस्य तादृशी क्रिया हास्यकारिण्येव । तदेव, "राआ बह्मदत्तो, णगरं कंपिळ्ळं" इत्यादि राज्ञोपदिष्टं वाक्यम् । बहुशो नैकवारं पठित्वाभ्यस्य । इदानीं शृणोतु भवानित्युक्त्वावशिष्टां कथां कथयितुं प्रवर्तमाने तस्मिन् हों इत्याकारकस्य ध्वनेरश्रवणात्तन्मुखमवलोक्य वक्ति—अयि सुत्तो इति । राज्ञः स्वापस्य कारणन्तु मूर्खस्य तस्य पौनःपुन्येन नीरसेन पठनेन प्राप्तोद्विग्नतैव प्राधान्यतोऽवगन्तव्यम् । पठनरसभरस्य तस्यैतावत्कालपर्यन्तं शीतलवेलायाः परिज्ञानमेव नाजायत, निद्रिते च राज्ञि एकाकिनस्तस्य तस्याः प्रभावज्ञानमभूदिति ज्ञायते । येन चासौ वदति अतिशीतलेत्यादि । प्राव्रियतेऽनेन शरीरमिति प्रावारकः उत्तरीयम् । "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा । संव्यानमुत्तरीयं च" इत्यमरः । विदूषकस्य तस्मात्स्थानान्निर्गमनमेवेष्यते कविनेति सुस्पष्टमेव । प्रावारकमानेतुं विनिर्गते तस्मिन् वासवदत्तायाः प्रवेशेन सर्वमपि वस्तुजातमवदातं भवेदिति हेतुस्तत्रेति विज्ञेयम् ।

पद्मावत्यवस्थापरिज्ञानाय वासवदत्तायाः प्रवेशमाह—ततः प्रविशतीत्यादिना । चेटी चेयं प्रायशो मधुकरिका नाम यया च निवेदितं पद्मिनिकानिदेशेन वासवदत्तायै पद्मावतीशीर्षवेदनावृत्तम् ।

**एदु एदु इति**—एत्विति द्विर्वचनं त्वरार्थं । दृढमतिशयेन दुःखिता, बलवती खलु तस्याः शीर्षवेदनेति यावत् ।

**हद्धीति**—हा धिक्, महत्कष्टमित्यभिप्रायः । तदवस्थां द्रष्टुमुत्कण्ठितासौ कुत्र खलु गन्तव्यमावाभ्यामिति कृत्वा पृच्छति—कहिं इत्यादि ।

**समुद्दगिहके इति**—स्वेनैव पूर्वं ( प्रवेशके ) पृष्टया पद्मिनिकया यत्कथितं तदेवानुवदति समुद्रगृहके इति ।

---

१ इह लहुअदरं एदु० ( इह लघुकतरमेतु० ) । २ °रिआ पदुमावदी ।

**वासवदत्ता**—तेण हि अग्गदो याहि । [तेन ह्यग्रतो याहि ।]

(उभे परिक्रामतः ।)

**चेटी**—इदं समुद्दगिहकं । पविसदु अय्या । जाव अहं वि सीसाणुलेवणं तुवारेमि । (निष्क्रान्ता ।) [इदं समुद्रगृहकम् । प्रविशत्वार्या । यावदहमपि शीर्षानुलेपनं त्वरयामि ।]

**वासवदत्ता**—अहो अकरुणा खु इस्सरा मे[1] । विरहपय्युस्सुअस्स अय्यउत्तस्स विस्समत्थाणभूदा इअं पि णाम पदुमावदी अस्सत्था जादा । जाव पविसामि । (प्रविश्य) अहो परिजणस्स पमादो ! अस्सत्थं पदुमावदिं केवळं दीवसहाअं करिअ परित्तजदि[2] । इअं पदुमावदी ओसुत्ता । जाव उवविसामि । अहवा अव्भासणपरिग्गहेण अप्पो विअ सिणेहो पडिभादि । ता इमस्सिं सय्याए उवविसामि । (उपविश्य) किं णु खु एदाए सह उवविसन्तीए अज्ज पह्ळादिदं विअ मे हिअअं । दिट्ठिआ अविच्छिण्णसुहणिस्सासा । णिव्वुत्तरोआए होदव्वं । अहव एअदेससंविभाअदाए सअणीअस्स सूएदि मं आळिङ्गेहि त्ति । जाव सइस्सं । (शयनं नाटयति ।) [अहो अकरुणाः खल्वीश्वरा मे । विरहपर्युत्सुकस्यार्यपुत्रस्य विश्रमस्थानभूतेयमपि नाम पद्मावत्यस्वस्था जाता ।

---

**तेण हीति**—अग्रतो याहि प्रचल, अर्थात्समुद्रगृहकमुद्दिश्य, अहमपि त्वामनुसरामीति तदभिप्रायः । परिक्रामतः, समुद्रगृहकमुद्दिश्य प्रचलतः ।

**इदमिति**—यथा विदूषकस्य तस्मात्स्थानान्निर्गमनमिष्टमासीत्कवेस्तथैव मधुकरिकाया अपि तदिति ज्ञायतेऽस्या वाक्येन । तच्च "शीर्षानुलेपनं त्वरयामि" इति । पूर्वं (प्रवेशके) पद्मिनिकेमां वासवदत्तां प्रति पद्मावतीशीर्षवेदनानिवेदनाय संप्रेष्य स्वयं च शीर्षानुलेपनानयनार्थमगमदित्युक्तमेव, एवञ्चास्यास्तदर्थं निर्गमनमधुनानुपयुक्तमेव । यथा चोपवर्णितं तेन चाचिरोक्तमनुमानमवदातमेव ।

**अहो इति**—दुःखराशिपराहताया वासवदत्तायाः परिचितमिदं वचनं तृतीयाङ्के (५५ पृष्ठे) "एदं पि मए कत्तव्वं आसी ! अहो अकरुणा खु इस्सरा !" इति । एतादृशान्यतिनिष्ठुराणि कृत्यानि घटयितारो देवा अनुकम्पालेशमप्यभजमाना वाच्यतां यान्तीति भावः । तत्र कारणं दीयते तया—विरहेत्यादि । विरहेण मद्विप्रयोगेन पर्युत्सुकस्योत्कण्ठितस्य विमनस्कस्येति वा आर्यपुत्रस्योदयनस्य, विश्रमस्थानभूता द्वितीयोद्वाहप्रसङ्गेन सुखहेतुतामापन्ना इयमपि पद्मावत्यस्वस्था

---

१ मम वि (ममापि) । २ विसज्जिअ णिग्गदो (विसृज्य निर्गतः) ।

यावत्प्रविशामि । अहो परिजनस्य प्रमादः ! अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति । इयं पद्मावत्यवसुप्ता । यावदुपविशामि । अथवान्यासनपरिग्रहेणाल्प इव स्नेहः प्रतिभाति । तदस्यां शय्यायामुपविशामि । किं नु खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम् । दिष्ट्याविच्छिन्नसुखनिःश्वासा । निवृत्तरोगया भवितव्यम् । अथवैकदेशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति । यावच्छयिष्ये । ]

---

वलयच्छीर्षवेदनया पीडिता जाता । तामेतां पीडितां ज्ञात्वा राजापि तत्प्रेम्णा वशीकृतो दुःखातिरेकव्याकुलो भूयादेवेत्यस्मादन्यत्किं खलु निष्ठुरं निष्पादनीयं दैवैरिति तदाशयः । विश्रमस्थानभूतेत्यत्र विश्रमस्थानमिवेति भूतशब्द इवार्थकः । अथवा विश्रमस्य स्थानं तत्समेति भूतशब्दः समवाचकः । तथा च मेदिनी—"भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवं त्रिपूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना । कुमारेऽपि" इति । शय्यागतमुदयनं पद्मावतीयमिति मत्वा तादृशप्रसङ्गोचितं परिजनसाहाय्यं तेषां परितोऽवस्थानञ्च नावलोकयन्त्यास्तस्या आश्चर्योद्गारः-अहो इति । परिजनस्य परिचारिकानां प्रमादोऽनवधानता । तत्परिचर्यापरा नैकापि दासी दृश्यतेऽत्र । पद्मावती निद्रिता वास्तु जागृता वा परिजनैरत्र सर्वथैवावश्यं स्थेयमेवेति तदभिप्रायः । दीप एव सहायः द्वितीयो यस्यास्ताम् । दीपसहायां पद्मावतीं कृत्वा तस्मात्स्थानाद्यत्किञ्चिदप्यविचार्य परिजनस्य निर्गमनमेव प्रमादस्य स्वरूपं विज्ञेयम् । एतत्सर्वमपि भाषणं वासवदत्तया पद्मावतीबुद्ध्यैव प्रक्रान्तमिति न विस्मर्तव्यम् । विदूषकश्च तस्मात्समुद्रगृहकात्पूर्वमेव प्रावारकानयनार्थं विनिर्गत एवासीत् । एवञ्च न सन्देहोदयस्तस्यास्तद्विषये इति सर्वमपि श्लिष्टमेव । यावदुपविशामि, अन्यासनस्वीकारेच्छा प्रदर्शिताऽनेन । यावत्सुखेन प्रसुप्ता तावदन्यस्मिन्नासने स्थित्वा परिपालयामीति तदाशयः । अथवा अन्यस्य पद्मावतीशय्याया भिन्नस्यासनस्य परिग्रहेण स्वीकारेणाल्पः परिमित एव स्नेहः प्रेम प्रतिभाति । परस्परं प्रेम्णा दृढं बद्धयोर्जनयोरेकस्मिन्काले एकस्मिन्स्थले च भिन्नासनपरिग्रहः परिचयन्यूनतां प्रकटयतीति सर्वजनीनमेव । तौ च पुनरेकत्रैवासने स्थित्वा यथेच्छं स्वैरालापादिकं कुर्वन्तीति बहुशो दृश्यते । तदेवैतन्मनसि कृत्वा तथोक्तमनयेति विज्ञातव्यम् । तच्छय्यायामुपवेशनेऽपि स एव हेतुरिति । किं नु खल्विति—एतया पद्मावत्या सह उपविशन्त्या, एकत्रैवासने इति शेषः । अद्य प्रह्लादितमानन्दभरितम् । बहुशोऽद्ययावदुपविशन्त्यास्तया सह मम न तथा यथाऽद्य सविशेषं तदित्यभिप्रायः । उदयनस्य तत्र सत्त्वं तस्याः पूर्णतयाविज्ञातमेव तथाप्यकृत्रिमप्रेमप्रभावेन काप्यवस्था तस्याः समजायतेति ज्ञायतेऽनेन । अनुभूयते चायं प्रकारो व्यवहारेऽपि यदकस्मात्कारणाभावे सत्यपि कापि विचित्रावस्था हृदयस्य संजायत इति । हिमरश्म्युदये सति चन्द्रकान्तस्य स्रवणे यथाविज्ञातो

**राजा**—( स्वप्नायते । ) हा वासवदत्ते !

**वासवदत्ता**—( सहसोत्थाय ) हं, अय्यउत्तो ? ण हु पदुमावदी ! किं णु खु दिट्ठह्मि ? महन्तो खु अय्ययोगन्धराअणस्स पडिण्णाहारो मम दंसणेण णिप्फळो संवुत्तो [1]। [ हम्, आर्यपुत्रः ? न खलु पद्मा-

---

हेतुस्तथैवात्र विषये कोऽप्यसंवेद्योऽसाविति दिक् । दिष्ट्येत्यानन्दे । अविच्छिन्नः निरन्तरः सुखः, सुखेन चलितः इति यावत्, निःश्वासो यस्याः सा । निद्रोपहतश्चोदयनस्तत्र स्वैरं सुप्त आसीत्, तस्य निःश्वासस्यायत्नचलितत्वात्तेनैव हेतुना पद्मावत्याः शीर्षवेदनास्वरूपस्य रोगस्य निवृत्तेर्निदानं तस्याः । अत एवाह—निवृत्तरोगेत्यादि । निवृत्तोऽपगतो रोगः शीर्षवेदनास्वरूपो यस्याः सा । यः खलु निवृत्तरोगस्तस्य निःश्वासस्तु सुखं प्रचलति, रुग्णस्य पुनरसौ प्रयत्नेनेति भूयोदर्शनादिति तत्र हृदयम् । ममागमनमत्र पूर्वमेवाशङ्क्य मदर्थमेवानया स्वसमीपं शयनाय रिक्तमर्धं शयनीयं कृत्वाऽर्ध एव तस्मिन्स्वयं सा प्रसुप्तेत्याशयेनाह—अथवैकदेशेत्यादि । शय्यागतेनामयिना स्वप्रियजनः स्वसमीपं स्वशय्यायामेव स्थित्वा स्वमालिङ्ग्य यथा सुप्यात्तथेष्यत इति दृष्टचरमेव । शयनीयस्य, एकदेशसंविभागतया, एकदेशस्य संविभागो विभक्तः प्रदेश इति यावत्, तस्य भावस्तया । शयनीयस्येति शब्दस्यैकदेशपदेनान्वयादेकदेशी समासः । एवञ्च शयनीयैकदेशस्य संविभक्ततयेत्यापयत इत्यवगन्तव्यम् । मामालिङ्गेति सूचयति स्वस्याभिप्रायं प्रकटयतीत्यर्थः । यावच्छयिष्ये, तदभिप्रायानुकूलमेव मयाचरणीयमेव नान्या गतिरिति । शयनं नाटयतीत्यत्र नाटयतीति पदं न स्वारस्यमावहति, यतो नटनस्य न किमपि फलमिहोत्प्रेक्ष्यते । शेते इत्यनेनैव निर्वाहोऽभविष्यत् । समीपं शयित्वापि तस्याः पद्मावतीभिन्नस्य जनस्य विषये शङ्का कापि नोदिता । तत्र च कारणानि तत्रस्थस्य दीपस्य मन्दप्रकाशित्वं, विदूषकस्यान्यतो गमनमित्यादीनि प्रायः पूर्वमुक्तान्येव । अत्र च मुख्यत इदं विज्ञातव्यं यदुदयनः स्वापवेलायां शीतस्य प्रभावेनोपहतः प्रावारकादिकेन स्वमवगुण्ठ्यैव निद्रित इति, येन च सर्वोऽप्ययं प्रसङ्गोऽवदातः संपद्यते ।

**स्वप्नायत इति**—स्वप्नं वेदयतेऽनुभवतीत्यर्थः । "सुखादिभ्यः कर्तृवेदनायाम्" ( पा० सू० ३।१।१८ ) सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः । इति स्वप्नशब्दाद्वेदनायामर्थे क्यङ्–प्रत्ययः परिकल्पितव्यः । अयमेव स्वप्नप्रसङ्गोऽस्य नाटकस्य नामकरणे हेतुरिति सूक्ष्मया दृष्ट्यावधार्यम् । अत्रैवोत्स्वप्नायमानस्योदयनस्य राज्ञो वासवदत्तारतिविषयकः शोकानुभावः; क्रमेण चार्धजागृतस्यापसरन्त्या वासवदत्तायास्तस्य सन्दर्शनमिति सुरसतमो रचनाप्रकारः ।

**सहसेति**—पद्मावतीबुद्ध्या सविस्रम्भं शय्यायां शयाना सा उदयनस्य शब्दं

---

१ मन्दभाग्या ... ( मन्दभागधेया मया कि कृतम् )

वती ! किं नु खलु दृष्टास्मि ? महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः । ]

**राजा**—हा अवन्तिराजपुत्रि ![1]

**वासवदत्ता**—दिट्ठिआ सिविणाअदि खु अय्यउत्तो । ण एत्थ कोच्चि जणो । जाव मुहुत्तअं चिट्ठिअ दिट्ठिं हिअअं च तोसेमि । [ दिष्ट्या स्वप्नायते खल्वार्यपुत्रः । नात्र कश्चिज्जनः । यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयं च तोषयामि । ]

**राजा**—हा प्रिये ! हा प्रियशिष्ये ! देहि मे प्रतिवचनम् ।

---

श्रुत्वा विभ्रान्ताजायतेति ज्ञायतेऽनेन । सहसोत्थायात्मगतमिति तु युक्तमाभाति, तत्त्वेनैव तद्भाषणस्योचितत्वात् । किं नु खलु दृष्टास्मि, आर्यपुत्रेणेति शेषः । दृष्टायां मयि सर्वमेव कार्यजातं व्याकुलं संजायेतेति तदभिप्रायः । 'हा वासवदत्ते' इति संबोधनेन सत्यमसौ प्रबुद्ध एव मां दृष्ट्वाऽऽह्वयतीति तस्याः कल्पनाभूदिति प्रकल्प्यते । तदाशयकमेवाग्रिमं वाक्यं—महन्तो इत्यादि । आर्ययौगन्धरायणस्य प्रतिज्ञाभारः, रुमण्वदादिभिर्मन्त्रिभिः सह संमन्त्र्याङ्गीकृतं कार्यम् । तस्य च स्वरूपं प्रायः प्रथमेऽङ्के यौगन्धरायणस्य वाक्ये "हन्त भोः ! अर्धमवसितं भारस्य–" इत्यादौ सुस्पष्टमेव । तच्च पुनः प्रसङ्गेण कथ्यते । वासवदत्तायाः पद्मावतीनिकटे न्यासः, पद्मावत्युदयनयोर्विवाहः, शत्रुत उदयनस्य राज्यं प्रत्याहृत्य तस्य तस्मिन्स्थापनमिति संक्षेपेण तद्विज्ञेयम् । पद्मावत्युदयनयोर्विवाहस्तु संवृत्त एव, अवशिष्टे च राज्यप्रत्यायनस्वरूपे प्रत्यूहः स्यादनेन तत्कर्तृकस्वदर्शनेनेति तस्या आशयः ।

स्वप्नेऽदत्तप्रत्युत्तरां तां पुनरपि संबोधयति प्रकारान्तरेण—हा **अवन्तिराजपुत्रीति** ।

**दिट्ठिआ इति**—शय्यामधिशयान एव मामुद्दिश्य संबोधयति न पुनरुत्थितः । चिरदृष्टायामपि मयि, मामुद्दिश्याभिगमने न कोऽपि प्रयत्नस्तेनाङ्गीक्रियते इति सर्वं मनसि कृत्वा तस्या निदानं—स्वप्नायते इति । दिष्ट्येति कार्यव्याकुलतया विषण्णायास्तस्या आनन्दोद्गारः । कश्चिज्जन इति—यः खलु मां पश्येत्समुदाचारोल्लंघनहेतुना संदूषयेच्चेति शेषः । यावदिति—मुहूर्तकं स्थित्वा, अल्पं कालं यावदत्रैव समीपं स्थित्वेति । ज्ञायतेऽनेनोदयनविषयिणी तस्या अनल्पा प्रीतिः । अभिजनसंपन्ना ललनाः स्वभर्तुर्मुखे बद्धमपि चक्षुर्लज्जावशात्तन्निवर्तयन्ति सुप्तस्य पुनस्तस्य तस्मिन्निर्भरं तद्ददन्तीति सहृदयगम्यमिदम् । एतत्स्वरूपमेव दृष्टितोषणं हृदयसंतर्पणं च तयापीष्टमिति विज्ञेयम् ।

स्वप्नेऽदीयमानप्रतिवचनां तां पुनरपि प्रत्युत्तरितुं सम्बोधयति—हा प्रिये इत्यादिना ।

---

१ वासवदत्ते ! २ भोदु ।

**वासवदत्ता**—आळवामि भट्टा! आळवामि । [आलपामि भर्तः! आलपामि ।]

**राजा**—किं कुपितासि ?

**वासवदत्ता**—ण हि ण हि, दुक्खिदह्मि । [नहि नहि दुःखितास्मि ।]

**राजा**—यद्यकुपिता, किमर्थं नालंकृतासि ?

**वासवदत्ता**—इदो वरं किं ? [इतः परं किम् ?]

**राजा**—किं विरचिंतां स्मरसि ?

**वासवदत्ता**—(सरोषम्) आ अवेहि, इहावि विरइदा ? [आ अपेहि, इहापि विरचिता ?]

---

स्वस्य कृते तादृशमुत्कण्ठितं तदवस्थं च तं ज्ञात्वा तस्य स्वप्नस्यावस्थायां दृढं विस्रब्धाऽसौ झटिति मौनं विहाय प्रत्युत्तरति—**आळवामीति** । आलपामि, प्रतिवचनं दास्यामीति ।

**किमिति**—साक्षादुक्तमपि प्रतिवचनं स्वप्नगतयैव तया प्रयुक्तमित्यर्धश्रवण-हेतुतया मत्वा पुनरपि पृच्छति—किमित्यादिना ।

**ण हीति**—न हीत्यादि तस्याः प्रत्युत्तरम् । कुपितास्मीत्यनुवर्तते पुरुषविपरि-णामेन । दुःखितास्मि, एतदवस्थं त्वां दृष्ट्वेति भावः ।

**यद्यकुपितेति**—वासवदत्ताप्रत्युत्तरस्य दुःखितास्मीत्युत्तरार्धं तस्य श्रवणं नाप्राप्नोदिति ज्ञायतेऽनेन । किमर्थमित्यनलङ्करणे शरीरस्य हेतुजिज्ञासायाम् ।

**इदो वरमिति**—इतः अस्मात् तद्वियोगप्रभवाद्दुःखात् परमन्यत्किं, कार-णमिति शेषः । अथवा इतः, अस्माद् भाषणात्परं किमपरं ते प्रष्टुं वर्तत इत्यपि ।

**किं विरचितामिति**—यद्यकुपिता किमर्थं नालङ्कृतासीति वचनेन कोपा-भावेऽनलङ्करणं सुसङ्गतं नैव मन्वानस्तत्कोपहेतुमन्यं कमप्युत्प्रेक्षमाणः पृच्छति—किमित्यादि । विरचितेति—उदयनस्य राज्ञोऽन्तःपुरे नियुक्तायाः परिचारिकाया नामधेयम् । उदयनश्च मनसि कदाचिच्चलो भूत्वा तया सह समगच्छतेति कथा-सरित्सागरगतात्कथावस्तुनः परिकल्प्यते । प्रसङ्गतश्च स वासवदत्तासमागमे गोत्र-स्खलनेन लज्जितस्तस्याः पादपतनेन प्रासादयत्तामिति । तथा च तत्र—"सोऽपि वत्सेश्वरो जातु चपलः पूर्वसङ्गताम् । गुप्तं विरचितां नाम भेजेऽन्तःपुरचारिकाम् । तद्गोत्रस्खलितो देवीं पादलग्नः प्रसादयन् । लेभे सुभगसाम्राज्यमभिषिक्तस्तद-श्रुभिः ॥" इति । तस्यैतस्य वृत्तस्याधुनापि संस्कारान् हृदि धारयन्ती त्वं प्रकुप्या-नलङ्कृता वेति तदभिप्रायः ।

---

१ विरचिकाम् ।

**राजा**—तेन हि विरचितार्थं भवतीं प्रसादयामि ।

( हस्तौ प्रसारयति । )

**वासवदत्ता**—चिरं ठिदह्मि । को वि[1] मं पेक्खे । ता गमिस्सं । अहव सय्यापळम्बिअं अय्यउत्तस्स हत्थं सअणीए आरोविअ गमिस्सं । ( तथा कृत्वा निष्क्रान्ता । ) [ चिरं स्थितास्मि । कोऽपि मां पश्येत् । तद्गमिष्यामि । अथवा शय्याप्रलम्बितमार्यपुत्रस्य हस्तं शयनीय आरोप्य गमिष्यामि । ]

**राजा**—( सहसोत्थाय ) वासवदत्ते ! तिष्ठ तिष्ठ । हा धिक् ।

---

**आ अवेहीति**—रोषश्च सपत्नीनामश्रवणेनेति विज्ञेयम् । अपेहि, सुदूरं गच्छ, तच्चेतन्मानसनिर्मितां विरचितामुद्दिश्येति । इहापि, मगधराजधान्यामपि ।

**तेन हीति**—तेन हि, तस्माद्धेतोः, यदि विरचितैव प्राधान्यतस्ते कोपस्य कारणं तदा विरचितार्थं, विरचितानामग्रहणप्रमादाद्धेतोः, भवतीं प्रसादयामि, आराधयामि । हस्ताविति—हस्तप्रसारणं च प्रसादनार्थं क्रियत एवेति सुप्रसिद्धम् । एतादृशः संवादः प्रसुप्तजाग्रतोर्मध्ये घटितः कदाचिदसंभवग्रस्त एवेति मन्येत कैश्चिदिति सत्यमेव, तथापि भूतपूर्वमेव वृत्तं स्मरंस्तत्तथैवात्रानुवदतीति कृत्वा स दोषः परिह्रियेत । कस्यचिदंशस्य ग्रहणेन कस्यचिदंशस्य त्यागेन स्वप्नसंवादे दोषाभावमुत्पादितुमिच्छतः कवेरपि कौशल्यं प्रशस्यमेव ।

**चिरमिति**—चिरं स्थितास्मि, आर्यपुत्रस्य चिराल्लब्धे संदर्शने समुत्कण्ठितायाः, अवसरं च लब्ध्वा सुचिरं तं पिबन्त्या नयनाभ्यां, तदुत्स्वापावस्थालापश्रवणं यथेच्छं कुर्वन्त्या मम सुमहान्कालोऽतीतोऽत्रेति भावः । नेदानीमत्रेतः परं स्थातुं योग्यमित्यभिप्रायः । प्रसादनार्थं प्रसारितं शयनाच्च प्रलम्बमानं तस्य हस्तं शयनीये स्थापयितुमिच्छन्ती आह—अथवेति । अत्र च कारणं प्रामुख्यतो लब्धसंदर्शनतदालापसुखायास्तस्या मनसि स्पर्शसुखमपि तदानीमनुभवितव्यमिति प्रबलेच्छा प्रावर्ततेति तदेव सूक्ष्मतयाऽवगन्तव्यम् । प्रलम्बमानावस्थायां स्थितस्य तद्धस्तस्य कालापगमेन कदाचित्पीडायाः संभव इत्यपि तद्विषये तन्मसृणान्तःकरणसंवेदनाप्रतिबिम्बं स्फुटं विज्ञेयम् ।

**सहसेति**—वासवदत्ताया हस्तस्य स्पर्शेन किमपि संवेदनं तस्याजायतेति स्पष्टमत्र विज्ञायते, येन च स सहसैव प्रबुद्ध उदतिष्ठत् । निष्क्रामन्त्यास्तस्या अस्फुटं संदर्शनं चापि तस्याभूदित्यपि विज्ञायते तत्सम्बोधनेन "वासवदत्ते" इत्यादिना । निष्क्रामन्त्या वासवदत्तया संवृतेन द्वारकपाटेन रभसात्तत्पृष्ठतोऽनुसरतस्तच्छिरसि ताडितत्वाद्दुःखितस्य तस्योद्गारो—हा धिगिति । अर्धजागृतानां जनानां

---

१ वि जणो ( °पि जनो ) ।

निष्क्रामन् सम्भ्रमेणाहं द्वारपक्षेण ताडितः ।
ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥ ७ ॥

(प्रविश्य)

**विदूषकः**—अइ पडिबुद्धो अत्तभवं । [अयि प्रतिबुद्धोऽत्रभवान् ।]

**राजा**—वयस्य ! प्रियमावेदये । धरते खलु वासवदत्ता ।

**विदूषकः**—अविहा वासवदत्ता । कहिं वासवदत्ता ? चिरा खु उवरदा वासवदत्ता । [अविहा वासवदत्ता । कुत्र वासवदत्ता ? चिरात्खलूपरता वासवदत्ता ।]

**राजा**—वयस्य ! मा मैवं,

शय्यायामवसुप्तं मां बोधयित्वा सखे ! गता ।
दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥ ८ ॥

---

प्रमत्तानामिव काप्यवस्था संजायत इति तु सर्वजनीनमेव । यत्खलु दुःखकारकं समजायत तदेव कथयति—

**निष्क्रामन्निति**—सम्भ्रमेण रभसान्निष्क्रामन्नहं, सत्यं वासवदत्तैव वा सेति द्रष्टुं द्वारमभिलक्ष्य गन्तुमुद्यत इति यावत् । द्वारपक्षेण समुद्रगृहकस्य प्रवेशद्वारस्यैकतरेण पक्षेण कपाटेन ताडितः प्रतिहतः । अस्मीति शेषः । तेन चाग्रे गमनं मे प्रतिरुद्धम्, अपि च सा वासवदत्ताऽऽसीन्न वेत्यस्यापि सुदूरैवाभवत् कथेत्यभिप्रायः । ततस्तमाद्धेतोः ताडनात्मकादिति यावत् । अयं वासवदत्तासंदर्शनस्वरूपः भूतार्थो वा सत्यविषयो वा, मनोरथो वा मनसा कल्पितो वासत्यविषय इति व्यक्तं स्पष्टं न जानामि । स्वप्ने सा ममानुभूतिविषयं गता जागृदवस्थायामपि पुनश्चक्षुषा दृष्टेव प्रतिभाति । एवं च न जानामि किमयं स्वप्नो वा विभ्रमो वा, अथवान्यत्किमपीति तत्तात्पर्यम् । वृत्तमनुष्टुप् ॥ ७ ॥

गाढं प्रसुप्तोऽधुना राजेति मत्वैव समुद्रगृहकात्प्रावारकानयनाय निर्गतोऽसौ पुनः प्रविश्य प्रबुद्धं तं पश्यत्यत एव तस्याश्चर्योद्गारः—**अयीति** ।

**वयस्येति**—प्रियं आवेदये कथयामि । धरते जीवति खलु वासवदत्ता । इदमेतस्य कथनं भूतार्थत्वेनैव गृहीतत्वात्तस्यार्थस्येति विज्ञेयम् । वासवदत्तायां तस्य परमः स्नेहः कारणं भूतार्थमनोरथयोर्मध्ये भूतार्थं एवेति प्रकल्पने ।

**अविहेति**—अविहेति विषादे । कुत्र वासवदत्ता, वासवदत्तां जीवन्तीं संभावयतस्ते बुद्धिभ्रंशः सञ्जात इति मे भातीति तदर्थः । सा च चिरादुपरता मृता । मृतस्य जनस्य जीवनमिति परस्परविरुद्धमेवेति भावः ।

**वयस्येति**—मा मैवं, उपरता सेत्यादिप्रकारेण, वदतु भवानिति शेषः ।

**शय्यायामिति**—हे सखे ! शय्यायामवसुप्तं निद्रितं मां बोधयित्वा विनिद्र

**विदूषकः**—[1]अविहा असम्भावणीअं एदं ण। आ उदअह्णाण-सङ्कित्तणेण तत्तहोदिं चिन्तअन्तेण सा सविणे दिट्ठा भवे। [अविहा असम्भावनीयमेतद् न। आ उदकस्नानसंकीर्तनेन तत्रभवतीं चिन्तयता सा स्वप्ने दृष्टा भवेत्।]

**राजा**—एवं, मया स्वप्नो दृष्टः।

यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम्।
अथायं विभ्रमो वा स्याद् विभ्रमो ह्यस्तु मे चिरम्॥ ९॥

---

कृत्वा गता। वासवदत्तेत्यर्थादेवापद्यते। प्रबोधनक्रियाया उत्तरं तस्या गमनेन मया सा दृष्टेति तदभिप्रायः। सा दग्धा, लावाणकग्रामदाहप्रसङ्गे, इति ब्रुवता रुमण्वता तदाख्येनामात्येन (अहं) पूर्वं, यदाऽहं वासवदत्तानाशदुःखेन पर्याकुल आसं रुमण्वांश्च मदन्वासनपर आसीत्तदा, वञ्चितः विप्रलब्धः। असत्यमेव किमपि मां तदासाववादीदिति तत्तात्पर्यम्। वृत्तमनुष्टुप्॥ ८॥

**अविहेति**—एतत्, त्वां विनिद्रं कृत्वैतस्मात्स्थानाद्वासवदत्ताया निर्गमनं, असम्भावनीयमश्रद्धेयं, नेत्यत्र प्रश्नकाकुः, न किमिति तदर्थः। अथवा एतद्, रुमण्वतो वचनं, असम्भावनीयमित्यादि पूर्ववत्। रुमण्वानसत्यं वदेदिति न श्रद्धार्हमेतदिति वा तदाशयः। अभ्यसितस्यैव वस्तुनः स्वप्ने संदर्शनमिति कृत्वा तत्पुरस्कृत्य तस्मिन्विषये स्वतर्कं निवेदयति—आ इत्यादिना। आः, ज्ञातं मया तत्र कारणमिति तदर्थः। उदकस्नानसंकीर्तनेन, "अस्त्युज्जयिनी नाम नगरी"—इत्यादिकथाकथन-प्रसङ्गेणोज्जयिनीविषयकान्संस्कारान्हृदि धृत्वा प्रसुप्तस्य तव पुनः स्वप्ने त उद्बुद्धा भवेयुरिति। एवं च तत्र ते वासवदत्तासंदर्शनमप्युपपद्यत इति तदाशयः।

**एवमिति**—एवं, तत्तथैव भवेद्यथा त्वमात्थेति, अथवैवं त्वं मनुसे किमिति काकुरपि। एवं मयेत्यादिना वाक्येन राज्ञोऽन्तःकरणस्य पर्याकुलता विशेषेण ध्वन्यते। स्वप्ने सा दृष्टा न पुनः सत्यं जीवन्तीति तदर्थः।

**यदीति**—यदि तावदयं स्वप्नः, भवेत्तदेति शेषः। अयमिति—मया सद्य एवानुभूतो वासवदत्ताकर्तृकप्रतिबोधनस्वरूपस्तस्या इतो निर्गमनादिस्वरूपश्च विषय इति। स्वप्नः, स्वप्नस्यावस्थायां सर्वमेवेदमनुभूतं चेत्तदा। अप्रतिबोधनं जाग्रदवस्थायामननुगमनं, सा स्वप्नावस्थावस्थितिरिति यावत्, धन्यमत्यर्थं मे प्रियमिति भावः। तत्रैव वासवदत्तासंदर्शनेन तदालापश्रवणेन चानुभूयमानसुख एवाहं भूयासमिति तदेवानुवर्ततामिति तदाशयः। अथ वेति पक्षान्तरे। अथ वा यदि, अयं उक्तविषयः, विभ्रमः स्यात्तदा हि। विभ्रमः, उन्मादो भ्रान्तिर्वा एतत्सदृश

---

१ मा दाणिं अणत्थं विचिन्तिअ। उदअन्भाणसङ्कित्तणेण तत्तहोदिं विचिन्तिअ तत्तहोदी विअ०।

**विदूषकः**—भो वअस्स ! एदस्सिं णंअरे अवन्तिसुन्दरी णाम जक्खिणी पडिवसदि । सा तुए दिट्ठा भवे । [ भो वयस्य ! एतस्मिन्नगरेऽवन्तिसुन्दरी नाम यक्षिणी प्रतिवसति । सा त्वया दृष्टा भवेत् । ]

**राजा**—न न,

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।
चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥ १० ॥

---

इति शेषः । मे चिरमस्तु सदैव प्रचललिति । यदि सत्यं नैतन्मया सर्वं दृष्टं तदा स्वप्नगतमेव तद् भवेदथवोन्मादवशादिति द्वावेव पक्षौ संभवतः । एवञ्च द्वयोरनयोरेकतरस्यापि सततमनुवर्तनेन मे प्रियतरमेवापद्येतेति तत्तात्पर्यम् । अत्र विभ्रमादिकस्य वस्तुनः प्रतिकूलतयाग्रहणेन स्वकार्यानुकूलत्वेनैव तत्स्वीकारेच्छासंदर्शनादनुकूलमलङ्कारः । तल्लक्षणं च साहित्यदर्पणे—"अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत्" इति । वृत्तमनुष्टुप् ॥ ९ ॥

वासवदत्ताभावे तत्संदर्शनं स्वप्नस्योन्मादस्य चावस्थायामेव संभवेन्नातोऽन्यथेति यदुक्तं राज्ञा तत्र न केवलं तावेव किन्त्वन्यदप्यस्ति कारणमिति कृत्वा तदेवावतारयति—**भो वअस्स** इत्यादिना । अवन्तिसुन्दरीति—अस्मिन्नगरे निवसन्त्या यक्षिण्या अपि अवन्तिदेशीयस्त्रीवेषसाधारणतया तस्यां वासवदत्ताभ्रमस्ते संजात इति मे तर्कः । अयञ्च प्रवादः प्रायो वासवदत्ताविषयक एवेति विज्ञायते । तस्या आवन्तिकावेषधारित्वादलौकिकसौन्दर्यवत्त्वादद्भुतक्रियाकारित्वाच्च सावन्तिसुन्दरीति नाम दत्वा यक्षिणीपदं प्रापिता तन्नगरनिवासिभिर्लोकैः । स्वकार्यं व्याकुलं मा भूयादिति कृत्वा सा वासवदत्ता सहसा जनदृष्टेः स्वरक्षणं कुर्वाणासुलभदर्शना यक्षिणीव लोकान्प्रत्यभासत । 'एतस्मिन्राजकुले' इति पाठे तु स तद्विषयक एवेति निःसन्देहतया वक्तुं शक्यम् । एनं च प्रवादं कर्णपरम्परया विदूषकोऽपि श्रुतवानासीदित्यनेन प्रकल्प्यते । यक्षिण्या यत्र कुत्रचित्स्वेच्छया परिभ्रमणं संभवनीयमेव । एवञ्च तस्या अत्रागमनमपि न खलु नासंभाव्यम् । तत्संदर्शने सति तत्र वेषसाधारण्यात्ते वासवदत्ताभ्रम युक्त एवेति भावः ।

**न नेति**—न नेति द्विर्वचनं दार्ढ्याय । तेन नैव मया सा यक्षिणी दृष्टा किन्तु वासवदत्तैवेत्यभिप्रायः । स्वप्नविभ्रमयोर्निरासं कृत्वा जागृतेन पुनर्मया यक्षिणी दृष्टा भवेदिति यत्त्वयानुमितं तत्तथा नैव प्रत्युत स्वप्ने वा विभ्रमे वा जागृति वा यस्यां कस्यामप्यवस्थायां भवतु मया वासवदत्तैव दृष्टेति तदाशयः ।

**स्वप्नस्येति**—स्वप्नस्य निद्राया अन्तेऽवसाने । "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरः । विबुद्धेन जागृतेन मया चरित्रमेव चारित्रं, तद्रक्षन्त्याः

---

१ राजकुले ( राजकुले )

अपि च वयस्य ! पश्य पश्य,

योऽयं सन्त्रस्तया देव्या तया बाहुर्निपीडितः ।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥ ११ ॥

**विदूषकः**—मा दाणिं भवं अणत्थं चिन्तिअ । एदु एदु भवं । चउस्सालं पविसामो । [ मेदानीं भवाननर्थं चिन्तयित्वा । एत्वेतु भवान् । चतुःशालं प्रविशावः । ]

---

परिपालयन्त्याः । चारित्र्यपरिपालने च हेतू मुखस्य द्वयोर्विशेषणयोर्विशेषतो गृह्येते । प्रथमश्च हेतुर्नेत्रयोरनञ्जनवत्त्वं, कुन्तलानामसंस्कारवत्त्वं चेति द्वितीयोऽसाववगन्तव्यः । स्वविप्रयोगेण विरहिण्या अवस्थामनुभवन्त्यास्तत्तस्या उचितमेवेति भावः । तदेतादृशं कविभिर्बहुलं तत्र तत्रोल्लिख्यते । तथाहि मेघदूते—"हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वात्" । "शुद्धस्नानात्परुषमलकं नूनमागण्डलम्बम्" । "स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्तीं । गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥" इत्यादि । प्रबलरुदितेन संस्काराभावाच्च नेत्रयोरञ्जनशून्यवत्त्वं चापि तथेति विज्ञेयम् । तथाभूताया वासवदत्ताया नेत्राभ्यां विप्रोषितं अपगतं, तच्च निःशेषमिति विप्रोषितशब्दसंप्रयोगाज्ज्ञायते, अञ्जनं यस्मिंस्तत् । दीर्घा विमुक्ताः, आलम्बमाना इति यावत्, अलकाः केशा यस्मिंस्तत् । तादृशं मुखं दृष्टम् । यदि त्वदनुमानमनुलक्ष्य विचारिते यक्षिण्याः पुनर्मुखस्य तथात्वं किंप्रयोजनकमिति शङ्काग्रस्त एव विषयोऽखिलः सम्पद्येतेति तदाशयः । जीवन्त्यां पुनर्वासवदत्तायां सर्वमपीदं संभाव्यत एवेति दिक् । वृत्तमनुष्टुप् ॥ १० ॥

**अपि चेति**—नेदमेव केवलं यत्तस्याः सन्दर्शनमजायत किन्तु स्पर्शोऽपि स्वप्ने मया तस्या अनुभूत इत्याशयेनाह—पश्येति । पश्य पश्येत्यस्य श्लोकार्थेनान्वयः ।

**योऽयमिति**—सन्त्रस्तया भयपरिवशया तया देव्या वासवदत्तया निपीडितः स्वहस्ते गृहीत्वा किञ्चिद्दृढं निगृहीतः । परस्परं प्रेम्णा दृढं बद्धयोर्जनयोर्दृश्यते हीयं रीतिर्यन्मिथोऽन्यतरस्य हस्तं स्वहस्ते गृहीत्वान्यतरेण स निपीड्यते इति । तत्तु स्वसंवेद्यम् । यौगन्धरायणस्य प्रयत्नः सर्वथैव विफलो मा भूयाद्राज्ञः प्रबोधनेनेति तस्या भयपरवशतोचितैवेति विज्ञेयम् । योऽयं, स्वप्नेऽपि स्वापावस्थायामपि उत्पन्नः प्राप्तः संस्पर्शः तद्धस्ततलस्पर्शः यस्य सः । (तथाभूतः सोऽसौ अद्यापि, व्यतीतेन कालेनापि) रोमहर्षं रोमाञ्चाधिगमं न मुञ्चति न त्यजति, अद्यापि तथैव रोमाञ्चितो दृश्यत इति यावत् । ज्ञायते च वासवदत्ताया हस्तस्पर्शे किमप्यलौकिकत्वमासीद्येन च तस्य बाहुः स्वप्नेऽपि रोमाञ्चैर्व्यभूषयत । अनुभूतसुखस्य चिरकालस्थितिवत्त्वं तेनानुबभूवे इति ज्ञायते, यतश्चाह—रोमहर्षमित्यादि । रोमहर्षं न मुञ्चतीत्यनेन वासवदत्ताविषयिण्या रतेरनुभावो रोमाञ्चस्वरूप उक्तः । वृत्तमनुष्टुप् ॥ ११ ॥

**मा दाणिमिति**—अनर्थं, अनुचितमर्थमिति यावत् । चतुःशालप्रवेशनस्य

---

१ अत्ताणं ओहसिदं कादुं ( आत्मानवहसितं कर्तुम् ) ।

( प्रविश्य )

**काञ्चुकीयः**—जयत्वार्यपुत्रः । अस्माकं महाराजो दर्शको भवन्तमाह—एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदयेनोपयातः खल्वारुणिमभिघातयितुम् । तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि सन्नद्धानि । तदुत्तिष्ठतु भवान् । अपि च,—

भिन्नास्ते रिपवो भवद्गुणरताः पौराः समाश्वासिताः
पार्ष्णी याऽपि भवत्प्रयाणसमये तस्या विधानं कृतम् ।
यद्यत् साध्यमरिप्रमाथजननं तत्तन्मयानुष्ठितं
तीर्णा चापि बलैर्नदी त्रिपथगा वत्साश्च हस्ते तव ॥१२॥

---

तु मुख्यतः प्रयोजनं राज्ञस्तथावक्षिप्तस्य चित्तस्यान्यस्मिन्विषये प्रेषणेन तावता वा परिमाणेन विनोदनं भवेदिति विज्ञेयम् । चतुःशालमित्यादिवाक्यमिदं विदूषकस्य पूर्वस्मिन्वचने दृष्टा भवेदित्यनन्तरं कुत्रचिद्दृश्यते ।

**जयत्विति**—आर्यपुत्रेत्यामन्त्रणं स्त्रिया भर्तारमुद्दिश्य नाट्ये क्रियमाणं काञ्चुकीयेन कृतं तच्चिन्त्यमेव । एष खल्वित्यादिना दर्शकस्य संदेशं यथोक्तमेवानुवदति । तेन च सन्दर्भेणावशिष्टस्यारुणिनाशस्वरूपस्य स्वस्वामिराज्यप्रत्यायनस्वरूपस्य च कार्यस्य संपादनार्थं रुमण्वता महान् सन्नाहः कृत इति ज्ञायते । तत्र च यथाप्रतिज्ञं व्यवह्रियमाणो राजा दर्शकोऽपि तस्य साहाय्यमाचरतीति सुस्पष्टमेव । बलानां समुदयेन संहत्या, समूहेनेति यावत् । "समुदायः समुदयः समवायश्चयो गणः" इत्यमरः । उपयात उपस्थितः । आरुणिरित्युदयनस्य शत्रोर्नामधेयम् । अभिघातयितुं नाशयितुम् । मामकानि मत्सम्बद्धानि । हस्त्यश्वरथयुक्ताः पदातयः (पदिकाः) येषु तानि । "पदातिपत्तिपदगपादातिकपदाजयः । पद्गश्च पदिगश्च" इत्यमरः । विजयप्रतिपादकानि अङ्गानि उपायाः, सैन्यानीति यावत् । "अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके" इति मेदिनी । सन्नद्धानि सज्जानि । "संनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः" इत्यमरः । तदुत्तिष्ठतु भवान्, तदभिगमनकार्यार्थमिति शेषः । अपि चेत्यनेनावशिष्टस्याकथितस्य संदेशस्य पुनर्निर्वचनम् । तस्य च श्लोकेनान्वयः ।

**भिन्ना इति**—अत्र खलु शत्रोर्नाशार्थं यत्खलु समनुष्ठितं तत्सर्वमपि प्रख्याप्यते दर्शकेन राज्ञा । ते रिपवः शत्रवो भिन्नाः, भेदं तेषु विनिर्मायासंहतिं यथा ते प्राप्नुयुस्तथा कृतमिति । शत्रुषु च जाते भेदे सौकर्येण ते नाशयितुं शक्या इति तु राजनीतिबीजमेव । "नयान्तरेण साध्येऽर्थे दण्डं नारभते सुधीः" इति न्यायेन भेदनीतिं प्रयुञ्जानस्य दर्शकस्य वैदग्ध्यमेव दृश्यते । भवतः गुणेषु शौर्यौदार्यादिषु रताः, त्वद्गुणगणाकृष्टा भवत्यनुरागं परमं दधाना इति यावत्, पौराः कौशाम्बीनगरनिवासिनो जनाः समाश्वासिताः, अचिरेणैव भवतां नृपतिः शत्रुं विनिर्जित्य

राजा—( उत्थाय ) बाढम् । अयमिदानीम्,—

उपेत्य नागेन्द्रतुरङ्गतीर्णे तमारुणिं दारुणकर्मदक्षम् ।
विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि नाशयामि ॥१३॥

( निष्क्रान्ताः सर्वे । )

## पञ्चमोऽङ्कः

भवतः सुखभाजिनः करिष्यतीत्यादिकं कथयित्वा विस्रम्भं प्रापितः । भवतः प्रयाणसमये या पार्ष्णी, ध्वजिन्याः पृष्ठभागः, तस्या विधानं कृतं, तद्रक्षणोपायविनियोजना संपादिता । अत्र पार्ष्णीशब्द ईदन्तः प्रयुक्तो दृश्यते स प्रामादिक एवेत्याभाति, स च न तादृशः किन्तु ह्रस्वेदन्त एवेति सुस्पष्टतया विज्ञायते । तथा ह्यमरे—"पुमान्पार्ष्णिस्तयोरधः" इति । "पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीकटौ" इति रन्तिदेवोऽपि । एवञ्च पार्ष्णिर्यापीति पाठो निर्मितश्चेत्स श्रेयानेवेत्यर्थादेवापद्यते । यत् यत्, सामग्रीजातमिति शेषः । अरीणां शत्रूणां प्रमाथो नाशस्तं जनयति तादृक् साध्यं संपादनीयमस्ति तत् तत् । मयानुष्ठितं संपादितम् । बलैः सैन्यैः त्रिपथगा त्रिभिः पथिभिराकाशभूतलपातालमार्गैर्गच्छन्ती नदी गङ्गा तीर्णोल्लङ्घिता । भारते च—"क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः । दिवि तारयते देवांस्तेन त्रिपथगा स्मृता" इति त्रिपथगाशब्दनिर्वचनम् । अनेन च न खलु बलैस्ते प्रतीक्षा कृता किन्तु पूर्वमेव त्वरयाऽग्रे प्रस्थितं तैरिति ध्वनितम् । वत्साश्चेति वत्सदेशस्तव हस्ते । हस्तगतानेव तान् विजानीहीति दर्शकस्य वत्सदेशप्रत्यायनविषय आशङ्कालेशस्य नामापि नेति द्योत्यते । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

**बाढमिति**—बाढं सत्यं, यत्खलु दर्शकेन राज्ञोक्तं तत्तथैव करोमीति । अयमिदानीमित्यस्य श्लोकेनान्वयः । नाशयामीति क्रियासामर्थ्यादुपस्थाप्यतेऽहमर्थकः कर्ता । तेन अयमहमिदानीं युधि नाशयामीति सरलोऽन्वयो विज्ञेयः ।

**उपेत्येति**—इदानीमयमहं, उपेत्य सङ्ग्रामस्थलमिति शेषः । नागेन्द्राः गजश्रेष्ठाः तुरङ्गाः अश्वाश्च तीर्णाः अवतीर्णाः, वेगेनेतस्ततः सञ्चरन्त इति यावत्, यस्मिंस्तस्मिन् । बाणाः उग्रतराणां तरङ्गाणां भङ्गाः खण्डाः इवेत्युपमितसमासः । ते विकीर्णाः आसमन्तात्प्रसृता यस्मिंस्तस्मिन् । महार्णवस्य आभा शोभा इव शोभा यस्य तस्मिन्, युधि सङ्ग्रामे । दारुणेषु कर्मसु दक्षमभिरतमारुणिं तन्नामकं मम शत्रुं नाशयामि । महार्णवपक्षे तु, नागेन्द्राः सर्पश्रेष्ठाः तुरङ्गाः जलतुरंगमास्तीर्णाः सम्प्लवना यस्मिन्, विकीर्णाः बाणाः इव उग्रतरङ्गा यस्मिन्निति विज्ञेयम् । महार्णवाभे युधीत्यत्रोपमालङ्कारो विज्ञेयः । वृत्तमुपेन्द्रवज्रा । "उपेन्द्रवज्रा जतजास्ततो गौ" इति तल्लक्षणात् । निष्क्रान्ताः सर्वे इति पञ्चमाङ्कपरिसमाप्तिः ।

इति दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा विरचितायां स्वप्नवासवदत्तव्याख्यायां पञ्चमोऽङ्कः ।

## षष्ठाङ्कस्य विषयः ।

आरुणिना साकं योद्धुं दर्शकेन राज्ञा रुमण्वता चामात्येन कृतस्य सन्नाहस्य स्वरूपं तु पूर्वाङ्के कथितमेव । अत्र च परिकल्प्यते यदुदयनस्तेन साहाय्येन सङ्गतः स्वशत्रुं सङ्ग्राम उन्मूल्य स्वराज्यं हस्तगतमकरोदिति । एतच्च ज्ञायते मिश्रविष्कम्भके काञ्चुकीयस्य वचनेन "वत्सराज्यलाभप्रवृद्धोदयायोदयनाय" इत्यादिना । एष च काञ्चुकीयो वसुन्धरानाम्न्या वासवदत्ताधात्र्या सह महासेनाङ्गारवत्योः सन्देशं गृहीत्वा तमुदयनाय श्रावयितुं कौशाम्बीमागच्छति । एतद्दर्शनेनोदयनस्य राज्ञो वासवदत्तावीणालाभेन स्मृतिसन्तानदुःखितस्यापि विनोदनमेव भूयादिति कृत्वावसरं च लब्ध्वा प्रतीहार्या तत्समीपं प्रापितो महासेनस्याङ्गारवत्याश्च कुशलं श्रावयति । तदानीं पद्मावत्या अपि संनिधानं राज्ञेष्यते । एवं च पुनर्वासवदत्तास्मृत्युत्थितशोकेनोपहतात्मन उदयनस्य दुःखोद्रेकं वीक्ष्य पद्मावत्या ताभ्यां च स परिसान्त्व्यते । प्रसङ्गेन चाङ्गारवत्या तद्विनोदनाय प्रेषितं विवाहसमये लिखितं चित्रफलकं काञ्चुकीयो राज्ञे उपनयति । तत्र आवन्तिकासादृश्यं वासवदत्ताचित्रे भृशमुत्प्रेक्षमाणा पद्मावती स्वस्याशङ्कां राज्ञे कथयति । आवन्तिकां द्रष्टुमिच्छन्राजा यावत्तां तथाज्ञापयति तावदेव यौगन्धरायणः पुनरपि ब्राह्मणवेषेण स्वन्यासं भगिनिकारूपं पद्मावतीं प्रत्यर्थयितुं तत्रैवागच्छति । क्रमेण च सर्वस्यापि रहस्यस्योद्भेदस्तेनैव क्रियते । येन चाकस्मादापतितेन शुभावहेन घटनेन सन्तुष्टो राजा सर्वैः साकमिदं वृत्तं महासेनाय कथयितुं तं च समाश्वासयितुमुज्जयिनीमुद्दिश्य प्रतिष्ठते ।

## षष्ठाङ्के स्थल-कालयोर्निर्णयः ।

**स्थलम्**—उदयनः स्वशत्रुं विनिर्जित्य स्वराज्यं हस्तगतं कृत्वा कौशाम्बीमध्युवासेति सुस्पष्टः सन्दर्भः । एवं गच्छता कालेन कदाचित् सूर्यामुखप्रासादे घोषवतीनाम्न्या वासवदत्तावीणायाः केनापि वादितायाः शब्दं परिचयवशाद्गृहीत्वा स द्रुतमेव तत्स्थलमधिगम्य तत्प्राप्तिस्तस्य कुतोऽजायतेति तं पृष्ट्वा ज्ञात्वा च तस्मात् तां स्वहस्तगतामकरोत् । ततस्तस्मादेव प्रासादादवतरति तस्मिन् प्रतीहार्या महासेनादागतं काञ्चुकीयं तस्मै न्यवेदयत् । तत एव षष्ठाङ्कस्य वस्तु प्रारभ्यते ।

**कालः**—पूर्वाङ्के तु कथितप्रायमेव यद्दर्शको रुमण्वतः साहाय्येनोदयनस्य शत्रुमारुणिं नानोपायैर्हतबलमकरोदिति, उदयनश्च तदनन्तरमेव तं समूलघातं हन्तुं प्रस्थित इत्यपि । एवञ्च ताभ्यां समापितप्राये युद्धे तस्य तत्रावतारः प्रकल्प्यते । तेन शत्रोर्नाशेन विजयसंपादनं प्रायः पञ्चषेष्वेव दिनेषु इति कल्पने न कोऽपि दोषः । सूर्यामुखप्रासादे वीणावादनस्य समयस्तु न सम्यक्तया ज्ञायते किन्तु "स्वामिन् ! देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्रभवती च" इति यौगन्धरायणस्य वाक्येन तयोर्गमनं कौशाम्ब्याः सायं तु नैव संभाव्यते किन्तु ततः पूर्वं प्रहरे प्रहरयोर्वा तत् । एवञ्चाखिलस्याङ्कगतस्य वस्तुनो घटनायै अवसरं दत्वा तत्र प्रभात एव प्रवृत्तमासीदिति तर्क्यते ।

## अथ षष्ठोऽङ्कः ।

( ततः प्रविशति काञ्चुकीयः । )

**काञ्चुकीयः**—क इह भोः काञ्चन[1]तोरणद्वारमशून्यं कुरुते ?

( प्रविश्य )

**प्रतीहारी**—अय्य ! अहं विजआ । किं करिअदु ? [ आर्य ! अहं विजया । किं क्रियताम् ? ]

**काञ्चुकीयः**—भ[2]वति ! निवेद्यतां निवेद्यतां वत्सराज्यलाभप्रवृद्धोदयायोदयनाय—एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः, तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च, प्रतीहारमुपस्थिताविति ।

---

पूर्वाङ्के तु कथाप्रसङ्गेनोज्जयिनीशब्दश्रवणादुपजातवासवदत्तास्मृतिसन्तानो राजा परं व्यमनायत, स्वप्ने च पुनस्तद्गातिविषयकाणां नानानुभावानामनुभूतिविषयं स्वं प्रापयदिति च प्रतिपादितम् । इह च वासवदत्तोपभुक्ताया घोषवत्या वीणाया लाभेन पुनरपि विमूढस्य तस्य करुणपोषिकां वासवदत्तायाः स्मृतिमलौकिक्या सरण्या प्रदर्शयितुं तत्रोचितैश्च पात्रैर्मिश्रविष्कम्भकं रचयितुमिच्छन्कविः प्रथमत उज्जयिनीतो महासेनसन्देशं गृहीत्वा कौशाम्बीं प्राप्तस्य काञ्चुकीयस्य प्रवेशमाह—**तत** इत्यादिना । काञ्चुकीयशब्दस्य निर्वचनं द्रष्टव्यं प्रथमाङ्के ( १२ पृष्ठे ) ।

**क इहेति**—काञ्चनेन सुवर्णेन युक्तमुपशोभितं वा तोरणद्वारं बहिर्द्वारं, अर्थाद्राजप्रासादस्यैव तत् । राजप्रासादस्य मुख्यं प्रवेशद्वारं सुवर्णरत्नमौक्तिकादिभिस्तत्र तत्र संयोजितैस्तदैश्वर्यख्यापनार्थं विभूष्यत इति तु दृष्टचरमेव । अशून्यं, स्वावस्थानेन रक्षितं युक्तं वा कुरुते । कः खल्वत्र वर्तते यो राज्ञा द्वाररक्षणे नियुक्त इति पृच्छार्थे तदर्थिका वचनभङ्गिः ।

प्रतीहारी, द्वाःस्थिता योषित् । "द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ।" इत्यमरः । "प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायां तु योषिति" इति मेदिन्युक्तादिशापि प्रतीहार-प्रतीहार्यौ शब्दौ द्वाःस्थजनवाचकाविति ज्ञायते ।

**अय्येति**—विजयेति प्रतीहार्या नामधेयम् । किमिति—किमर्थमहमाकारिता त्वया, किञ्च मया कर्तव्यमिति ।

**भवतीति**—निवेद्यतामित्यत्र द्विर्वचनेन कुशलसन्देशोपनयने कालातिपातासहत्वं व्यज्यते । वत्सानां राज्यस्य लाभेन प्राप्त्या प्रवृद्ध उदयो यस्य तस्मै । यत् खलु निवेदनीयं वस्तु तत्कथयति—एष इत्यादिना । रैभ्येण सगोत्रः, गोत्रेण नाम्रा

---

१ काञ्चनरत्न° । २ विजये !......महाराजाय वत्सराज्य° ।

**प्रतीहारी**—अय्य! अदेसकाळो पडिहारस्स । [आर्य! अदेशकालः प्रतीहारस्य ।]

**काञ्चुकीयः**—कथमदेशकालो नाम ?

**प्रतीहारी**—सुणादु अय्यो । अज्ज भट्टिणो सुय्यामुहप्पासादगदेण केण वि वीणा वादिदा । तं च सुणिअ भट्टिणा भणिअं—घोसवदीए सद्दो विअ सुणीअदि त्ति । [शृणोत्वार्यः । अद्य भर्तुः सूर्यामुखप्रासादगतेन केनापि वीणा वादिता । तां च श्रुत्वा भर्त्रा भणितं—घोषवत्याः शब्द इव श्रूयत इति ।]

---

सहितः, रैभ्यनमेत्यर्थः । "गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्ययोः । संभावनीयवोधे च काननक्षेत्रवर्त्मसु" इति मेदिनी । अमरश्च—"गोत्रं च नाम्नि च" इति । "गोत्रं क्षेत्रेऽन्वये छत्रे संभाव्ये बोधवर्त्मनोः । वने नाम्नि च गोत्रोऽद्रौ गोत्रा भुवि गवां गणे" इति हैमोऽपि । अत्र गोत्रशब्दो नामधेयवाची ग्राह्यो न पुनः कुलवाची । एतच्च स्पष्टतया ज्ञायते यौगन्धरायणस्य "अद्यैव प्रतिनिवर्तेतामत्रभवान्रैभ्योऽत्रभवती च" इति वाक्ये । अङ्गारवतीति वासवदत्ताया मातुर्नामधेयम् । वासवदत्ताया धात्री उपमाता । प्रतीहारं द्वारदेशम् । प्रतीहारशब्दो द्वारवाचकोऽपीति प्रतीहारीशब्दनिर्वचनेऽचिरादेव प्रदर्शिते द्रष्टव्यम् ।

**अय्येति**—प्रतीहारस्य द्वाःस्थस्य जनस्य, अदेशकालः, अप्राशस्त्ये नञ् । तेन अप्रशस्तो देशसंयुक्तः कालः समय इति । यस्मिन्स्थले राजाधुना वर्तते तन्नोपगम्यं मया, कालश्चासौ नोपसरणयोग्य इति नायं तेऽवसरो राजदर्शनस्येति तदाशयः । तत्र कारणं च तेन पृष्टा सा अग्रे कथयत्येव ।

अदेशकालस्य जिज्ञासायां प्रश्नः—**कथमिति ।**

**सुणादु इति**—अत्र चादेशकालस्य कारणं कथ्यते तया । भर्तुरित्यस्य प्रासादशब्देनान्वयादेकदेशी समासः । सूर्यामुखेति प्रासादस्य नामधेयम् । सूर्यं लक्षणया प्राचीदिशमनुरुध्य तद्द्वारस्य निर्मितत्वात्प्रायः स सूर्यामुखनामधेयभागभवदिति प्रकल्प्यते । अथवा भर्तुः वीणा वादिता, भर्तुः कृते तद्विनोदनाय वा सा वादितेत्यपि । किन्त्वस्वरसवहः खल्वेष अन्वयः । यतश्चाग्रे "ततस्तत्र गत्वा" इति प्रतीहारीवाक्येन राज्ञस्तत्रासन्निधानात्तदर्थमेव वीणावादनमिति विरुध्येत । घोषवतीति वासवदत्ताया वीणाया नामधेयम् । तां चेतां वासुकिभ्राता वसुनेमिः उदयनायार्पयदिति तत्कथाप्रपञ्चः कथासरित्सागरे द्रष्टव्यः । अस्या एव साहाय्येन प्रद्योतेन वासवदत्ताया वीणाध्यापने नियुक्त उदयनस्तामध्यापयदिति । एवञ्च घोषवत्या नादस्य चिरसंस्कारवत्तया कर्णयोस्तस्य तद्घोषवत्या इत्यादिभणनं युक्तमेव ।

---

१ सुय्यामुह० (सुय्यमुह०) ।

काञ्चुकीयः—ततस्ततः।

प्रतीहारी—तदो तहिं गच्छिअ पुच्छिदो—कुदो इमाए वीणाए आगमो त्ति। तेण भणिअं—अह्मेहिं णम्मदातीरे कुच्च-गुम्मळग्गा दिट्ठा। जइ प्पओअणं इमाए, उवणीअदु भट्टिणो[1] त्ति। तं च उवणीदं अङ्के करिअ मोहं गदो भट्टा। तदो मोह-प्पच्चागदेण वप्फपय्याउळेण मुहेन भट्टिणा भणिअं—दिट्ठासि घोसवदि! सा हु ण दिस्सदि त्ति। अय्य! ईदिसो अणवसरो। कहं णिवेदेमि? [ततस्तत्र गत्वा पृष्टः—कुतोऽस्या वीणाया आगम इति। तेन भणितम्—अस्माभिर्नर्मदातीरे कूर्चगुल्मलग्ना दृष्टा। यदि प्रयोजनमनया, उपनीयतां भर्त्रा इति। तां चोपनीतामङ्के कृत्वा मोहं गतो भर्ता। ततो मोहप्रत्यागतेन बाष्पपर्याकुलेन मुखेन भर्त्रा भणितं—दृष्टासि घोषवति! सा खलु न दृश्यत इति। आर्य! ईदृशोऽनवसरः। कथं निवेदयामि?]

---

ततस्तत इति—कुतूहलाविष्टस्य तस्याग्रे कथनार्थं त्वरावचनम्।

तदो इति—तत्र सूर्यामुखे प्रासादे। पृष्टः, स वीणावादकः। आगमः प्राप्तिः। अत्र वीणाया नर्मदातीर आगमस्तेन कथितः सन्देहग्रस्त इवाभाति। नर्मदानद्या विदूरत्वात्कौशाम्ब्याः। उज्जयिन्यां घोषवत्या एव साहाय्येन स वासवदत्तायै वीणा-वादनशिक्षामदात्। ततश्च पुनर्वासवदत्तां गृहीत्वा त्वरया कौशाम्बीं प्रति प्रस्थितस्य तस्य हस्ताद्भ्रष्टेति प्रकल्पने तदपि नर्मदातीरे कथमिति प्रश्नः समुद्भवत्येव। आरुणे-स्त्रासाल्लावाणकं गच्छतो मार्गेऽपि तस्यैतन्न संभवति, तस्यैव दोषस्य सद्भावादिति। एवञ्च स्थिते इदं प्रतिभाति यद्वासवदत्तादाहस्याळीकोद्घोषणाया अनन्तरं रुमण्वदा-दिभिरुदयनस्य प्रियतमेति कृत्वा सा वीणा अद्य यावदरक्ष्यत। अधुना च कपट-नाटकस्य वस्तुनः परिपूर्तिमपेक्षमाणास्ते कथमपि केनापि जनेन सा तस्योपनेतव्येति कृत्वा तथा सर्वमप्यघटयन्निति। घोषवत्याश्चास्यास्तथा परिभ्रंशस्तु कुत्राप्यस्मिन्नाटके नोपलभ्यत इति तत्त्वेवं प्रकल्पने साहाय्यमाचरत्येव। अथवा यदा हि लावाणके ग्राम उदयनस्य वासवदत्तया सह निवास आसीत्तस्मिन्नवसरे कदाचिन्मृगयाविनि-विष्टकौतुकस्य तस्य तदर्थं ग्रामाद्बहिः कुत्रचिदरण्ये गमनं प्रतिपादितमेव। मृगया-प्रसङ्गे हस्तिविलोभनार्थं तस्य स्वेन साकं वीणाया अप्यादानं संभवति। आसीच्च तस्या वीणायाः कोऽपि तदनुकूलो गुणः। ततश्च लावाणकग्रामदाहे सति वासव-दत्ताया नाशं तत्र श्रुत्वा भृशं पर्याकुलोऽसौ तत्स्मृत्युत्पादकानि बहूनि चिह्नानि दर्श

---

१ भट्टिणोत्ति (भर्त्रे इति)।

**काञ्चुकीयः**—भवति ! निवेद्यताम् । इदमपि तदाश्रयमेव ।

**प्रतीहारी**—अय्य ! इअं णिवेदेमि । एसो भट्टा सुय्यामुहप्पासादादो ओदरइ । ता इह एव्व णिवेदइस्सं । [ आर्य ! इयं निवेदयामि । एष भर्ता सूर्यामुखप्रासादादवतरति । तदिहैव निवेदयिष्यामि । ]

**काञ्चुकीयः**—भवति ! तथा ।

( उभौ निष्क्रान्तौ । )

मिश्रविष्कम्भकः ।

---

दर्श विललाप । तेन च नेदं स्थलमधुनासेवनीयमिति कृत्वा रुमण्वानामात्यस्तं गृहीत्वा तस्माद्ग्रामादपचक्राम । तस्मिन्समये वासवदत्तास्मृतिदायिनी सा वीणोदयनेन स्वसमीपं रक्षिता भवेत् । कदाचिन्नर्मदातीरेण प्रवसतो विमनस्कस्य तस्य हस्ताद्भ्रष्टा स्यादिति दिक् । कूर्चानां दर्भाणां गुल्मे गहने लग्नावसक्ता । प्रयोजनं कार्यम् । उपनीयतां गृह्यताम् । 'उपमीयतां भर्त्रे' इति पाठे तु सेवकेन केनापि स वीणावादकः पृष्टः, इत्यादि सर्वं विपरीतं प्रकल्पनीयं स्यात्तत्त्वस्वरसवहम् । तां चोपनीतां तस्माद् गृहीतां तामङ्के कृत्वा गृहीत्वा मोहमुपगतः । ज्ञायतेऽनेन वासवदत्तामुद्दिश्य कियत्खलु मसृणमन्तस्तस्यासीदिति । प्रथमेऽङ्केऽपि "दग्धशेषाण्याभरणानि परिष्वज्य मोहमुपगतः" इति ब्रह्मचारिवाक्यादपि तदेव ज्ञायते । मोहप्रत्यागतेन प्रकृतिमापन्नेन । बाष्पपर्याकुलेन अश्रुक्लिन्नेन मुखेन, उपलक्षित इति शेषः । सा, वासवदत्ता । दृष्टासीत्यादिर्दृश्यत इत्यन्तस्तस्य विलापप्रकारः । कथमिति—कथं निवेदयामि, ते आगमनमिति शेषः । एवं पर्याकुले तस्मिन्न खलु योग्योऽयमुपसरणे समय इति तदाशयः ।

**भवतीति**—भवति ! निवेद्यतां, अस्मदागमनमिति शेषः । इदमपि, अस्मदागमनमपि । तदाश्रयं, सा वासवदत्ता आश्रयो विषयो यस्मिंस्तथाभूतमेव । वीणालाभेनोत्थिता वासवदत्तास्मृतिस्तस्य मोहकारणं वा भवतु तत्प्रीतिपरवशतया सुखदायिन्येव । प्रस्तुते चैवमस्मदागमनमपि तदाश्रयत्वात्तत्र तस्यानुकूलमेव स्यादतो निवेदने न कोऽपि दोष आपद्येतेति भावः ।

**अय्येति**—भर्ता उदयनः । अवतरत्यवरोहति ।

**मिश्रविष्कम्भक इति**—तल्लक्षणं च साहित्यदर्पणे—

"वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।
शुद्धः स्यात्स तु संकीर्णो नीचमध्यमकल्पितः ॥

( ततः प्रविशति राजा विदूषकश्च । )

राजा—

श्रुतिसुखनिनदे ! कथं[1] नु देव्याः
स्तनयुगले जघनस्थले च सुप्ता ।
विहगगणरजोविकीर्णदण्डा
प्रतिभयमध्युषितास्यरण्यवासम् ॥ १ ॥

अपि च अस्निग्धासि घोषवति ! या तपस्विन्या न स्मरसि,

---

अयमत्र निष्कर्षः—शुद्धसंकीर्णभेदेन द्विविधो विष्कम्भकः । तत्रैकद्विमध्यमपात्रप्रयुक्तः संस्कृतात्मकः शुद्धः, मध्यमनीचपात्रप्रयुक्तः संस्कृतप्राकृतात्मकः संकीर्ण इति । अत्र काञ्चुकीयो मध्यमपात्रं प्रतीहारी चाधमं तदिति विज्ञेयम् ।

वीणावादकाद्धोषवतीं गृहीत्वा सूर्यामुखप्रासादादवतीर्णस्य राज्ञ उदयनस्य प्रवेशमाह—तत इत्यादिना ।

**श्रुतिसुखेति**—श्रुतेः कर्णस्य सुखः सुखकरः, आह्लादजनक इति यावत्, निनदो ध्वनिर्यस्यास्तत्सम्बुद्धिः । "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इत्यमरः । देव्या वासवदत्तायाः स्तनयुगले द्वयोः स्तनयोः, जघनस्थले जघनप्रान्ते च सुप्ता, त्वमिति शेषः । "जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि" इति मेदिनी । वादनार्थं गृहीताया वीणाया अधोभागो वादयितुरङ्के ऊर्ध्वश्च पुनरुरोभागं संस्पृश्य स्कन्धमारोहतीति तथोक्तम् । विहगाणां पक्षिणां गणः समूहस्तस्य रजसा मलेन, विष्ठयेति तदर्थः, विकीर्णो व्याप्तो दण्डो यस्याः सा । प्रतिभयं भयङ्करं अरण्यवासं अरण्यस्वरूपं निवासस्थानं कथं नु अध्युषिता असि निषेवितवत्यसि । "अथ भैरवम् ॥ दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् । भयंकरं प्रतिभयम्–" इत्यमरः । "वासो वेश्मन्यवस्थाने वासा स्यादाटरूषके" इति हैमः । "उपान्वध्याङ्वसः" ( पा० सू० १।४।४८ ) उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः । इति कर्मत्वम् । अध्युषितेत्यत्र "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च" ( पा० सू० ३।४।७२ ) एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्चेति कर्तरि क्तप्रत्ययोऽवगन्तव्यः । वृत्तं पुष्पिताग्रा ॥ १ ॥

**अपि चेति**—न स्निग्धा अस्निग्धा प्रेमशून्या । तपस्विन्याः अनुकम्प्यायाः न स्मरसि । कर्मणि षष्ठी, मातुः स्मरतीतिवत् । "तपस्वी तापसे चानुकम्प्ये त्रिष्वथ योषिति । मांसिकाकटुरोहिण्योः" इति मेदिनी । देवीं वासवदत्तां विहाय स्वीकृतारण्यवासां तामुद्दिश्य तस्योपालम्भवचनमिदम् । येत्यादेः श्लोकेनान्वयः ।

---

१ कथासु ।

श्रोणीसमुद्वहनपार्श्वनिपीडितानि
खेदस्तनान्तरसुखान्युपगूहितानि ।
उद्दिश्य मां च विरहे परिदेवितानि
वाद्यान्तरेषु कथितानि च सस्मितानि ॥ २ ॥

**विदूषकः**—अळं दाणिं भवं अदिमत्तं सन्तप्पिअ । [अल-मिदानीं भवानतिमात्रं सन्तप्य । ]

**राजा**—वयस्य ! मा मैवं,

चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥ ३ ॥

---

**श्रोणीसमुद्वहनेति**—( या त्वं तपस्विन्या वासवदत्तायाः ) श्रोण्यामङ्के समुद्वहनानि, वादनसमये तत्कर्तृकधारणानि, पार्श्वाभ्यां पक्षाभ्यां निपीडितानि संस्पर्शनानि च । वादनकाले वादयिता वीणामङ्के विधृत्य पार्श्वसंस्पृष्टामेव तां वादयतीति तथा प्रथितमेव । खेदे वादनपरिश्रमे, सञ्जाते सतीति शेषः, स्तनयोः कुचयोरन्तरे अवकाशे सुखानि विश्रान्तिसुखलम्भकानि उपगूहितानि आलिङ्गनानि । वादनेन परिश्रान्ता वीणावादकाः कदाचिद्विश्रमार्थं वीणां हृदये कृत्वा क्षणं तिष्ठन्तीति कृत्वा तथोक्तम् । विरहे विप्रयोगे मामुद्दिश्य परिदेवितानि, विलापवाक्यानि, कृतानि तानीति योजनीयम् । "विलापः परिदेवनम्" इत्यमरः । अनेन वचनेनोदयनस्य परिकल्पनयैव द्रष्टव्ये कः खलु विरहकालस्तेन परामृश्यत इति संदिग्धमिवाभाति । तादृक्कालस्यास्मिन्कथासन्दर्भे कुत्राप्यनुपलम्भात्, वर्णितश्च पुनस्तस्य तथात्वेन सर्वथैवाविज्ञात एवेति विज्ञेयमत्र । वाद्यस्य, वीणावादनस्येति यावत्, अन्तरेषु अवकाशेषु वीणाध्ययनवेलायां विश्रमार्थं मध्ये मध्ये लब्धेऽवसरे इति तदर्थः । सस्मितानि सहास्यानि कथितानि परिहासवाक्यानि । न स्मरसि । परस्परबद्धहृदययोर्गुरुशिष्ययोस्तयोः शिक्षाक्रमं क्षणं दूरीकृत्य कृतानि कथितानि कमपि गुणमावहन्तीति सहृदयहृदयस्पर्शीन्येव । यदि सत्यं ते तस्याः स्मरणं वर्तते तत्तत्त्यागः कथं त्वयोपपाद्यत इति त्वं सर्वथैव तां विस्मृतवत्यसीति तदाशयः । वृत्तं वसन्ततिलका ॥ २ ॥

**अळं दाणिमिति**—भवान् अतिमात्रमत्यर्थं, मात्रा स्तोकं तामतिक्रान्तमिति । सन्तप्य अलं, निर्भरेण सन्तापेन किमपि साध्यं नास्तीति भावः ।

**वयस्येति**—मा मैवं, भणेति शेषः । तत्रैव मे बहुतरं साध्यं वर्तते । न चासौ मे सहसा सुपरिहार्यः पुनरिति तदाशयः ।

**चिरप्रसुप्त इति**—मे चिरप्रसुप्तः, तथाभूतस्य समर्थस्योद्बोधकस्य वस्तुनो दर्शनाभावादद्यावधि चिरं एव निगूढं स्थितः । प्रतिबोधितः उद्रिक्तः कृतः । अत्र

वसन्तक ! शिल्पिजनसकाशान्नवयोगां घोषवतीं कृत्वा शीघ्रमानय ।

**विदूषकः**—जं भवं आणवेदि । [ यद्भवानाज्ञापयति । ]

( वीणां गृहीत्वा निष्क्रान्तः । )

( प्रविश्य ) **प्रतीहारी**—जेदु भट्टा । एसो खु महासेणस्स सआसादो रव्भसगोत्तो कञ्चुईओ देवीए अङ्गारवदीए पेसिदा अय्या वसुन्धरा णाम वासवदत्ताधत्ती अ पडिहारं उवट्ठिदा । [ जयतु भर्ता । एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयो देव्याङ्गारवत्या प्रेपितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थितौ । ]

**राजा**—तेन हि पद्मावती तावदाहूयताम् ।

**प्रतीहारी**—जं भट्टा आणवेदि । [ यद्भर्ताज्ञापयति । ]

( निष्क्रान्ता । )

---

कामप्रतिबोधनेऽकस्माल्लब्धा वीणोद्बोधकीभूता हेतुरित्यवगन्तव्यम् । तां तु देवीं वासवदत्ताम् । घोषवत्या साकं तस्याः परिचयस्तु बहुशो मेऽजायत । वीणावादनशिक्षायान्तु नियमेनैव पुनः सः । किन्तु अद्य तया विहीनैकाकिन्यसौ दृष्टा वीणा कथं न मे सन्तापं वर्धयेदिति तदभिप्रायः । वृत्तमनुष्टुप् ॥ ३ ॥

शिल्पं कलादिकमस्यास्तीति शिल्पी । "कारुः शिल्पी" इत्यमरः । "शिल्पी तु वाच्यवत्कारौ स्त्रियां कोलदलौषधौ" इति मेदिनी । तत्सकाशात् घोषवतीं नवः योगः नूतनस्तन्त्र्यादिसंयोगो यस्याः तां कृत्वा, भुवि पतनेन सञ्जातदोषामिमां नूतनतन्त्रीसंयोगादिकेन निर्दुष्टां कृत्वाऽऽनयेति तदर्थः ।

**जं भवमिति**—यथा भवानाज्ञापयति, तथा करोमीति शेषः । तस्यैतस्य निदेशस्य निर्वहणार्थं विदूषकस्य निर्गमनमुक्तं प्रवेशश्च पुनर्नोक्तः । अङ्कपरिसमाप्तौ समवहिते सर्वस्मिन्नपि वस्तुनि वीणासमेतस्य विदूषकस्यावस्थानमवश्यमेव वर्णनीयं तन्न तथेति भासते क्वापि न्यूनतेति सूक्ष्मतयावलोकयितव्यम् ।

**जेदु भट्टेति**—महासेनस्य प्रद्योतस्य राज्ञः । द्रष्टव्यं वासवदत्तावचनं द्वितीयाङ्के 'अत्थि उज्जइणीओ राआ पज्जोदो णाम । तस्स बळपरिमाणणिव्वुत्तं णामहेअं महासेणो त्ति' इति । प्रतीहारं द्वारदेशमुपस्थितौ प्राप्तौ ।

**तेन हीति**—पद्मावत्या सार्धं तयोः सत्कार इष्यते राज्ञेति प्रकल्प्यतेऽनेन वचनेन । तत्सन्निधानार्थमेव तथाप्रयुक्तमाज्ञावचनमिदम् ।

**जं भट्टेति**—यद्भर्ताज्ञापयति, तदेव निर्वहामीति शेषः ।

---

१ °सकाशं गत्वा ।

राजा—किं नु खलु शीघ्रमिदानीमयं वृत्तान्तो महासेनेन विदितः ।

(ततः प्रविशति पद्मावती प्रतीहारी च ।)

**प्रतीहारी**—एदु एदु भट्टिदारिआ । [एत्वेतु भर्तृदारिका ।]

**पद्मावती**—जेदु अय्यउत्तो । [जयत्वार्यपुत्रः ।]

**राजा**—पद्मावति ! किं श्रुतं महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः, तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च, प्रतीहारमुपस्थिताविति ।

**पद्मावती**—अय्यउत्त ! पिअं मे ञादिकुलस्स कुसलवुत्तन्तं सोदुं । [आर्यपुत्र ! प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम् ।]

**राजा**—अनुरूपमेतद् भवत्याभिहितं—वासवदत्तास्वजनो मे स्वजन इति । पद्मावति ! आस्यताम् । किमिदानीं नास्यते ?

---

**किं नु खल्विति**—किं नु खल्वित्यादिवचनेन राज्ञोऽन्तःकरणस्य सम्भ्रमत्वं ध्वन्यते । तत्र कारणं हि तेनैव तत्र मनाक् स्पृश्यते । तच्च पुनः राजसेनस्य स्वस्य पद्मावत्या साकं जातस्य विवाहस्य परिज्ञानमेव प्राधान्यतोऽवगन्तव्यम् । अयं वृत्तान्तः, स्वस्य पद्मावत्या साकं जातो यो विवाहस्तत्स्वरूपः, यदि विदितः स्यात्तदा महत्कष्टतरमिदमापतितमिति, तथा च तदर्थमेव मां निर्भर्त्सयितुमनयोर्मुखेनैतौ प्रेषितौ तेनेति ध्वनिः ।

**एदु एदु इति**—परिचरसमुदाचारोऽयं नाट्ये बहुलमुपलभ्यते ।

**जेदु अय्यउत्तो इति**—पतिसन्दर्शने नाट्यसमुदाचारोऽयम् ।

**पद्मावतीति**—किं श्रुतमिति, मया कथ्यमानं तच्छृण्विति तदर्थिका वचनभङ्गिः । कथय तावत्तौ दृष्ट्वा ताभ्यां तत्प्रेषितं सन्देशं गृहीवोऽथवा यत्किमपि कारणमलीकं कथयित्वा परिहार्यौ कथमपि ताविति तादृशवृत्तकथने गर्भितम् ।

**अय्यउत्त इति**—ज्ञातिकुलस्य, सम्बन्धिजनानां, प्रद्योतस्य कुलस्येत्यर्थः । उदयनस्य प्रथमकलत्रसम्बन्धाद्वासवदत्तायाः पित्रोरपि उदयनस्य सम्बन्धेन स्वसम्बन्धित्वप्रकल्पनं विज्ञेयम् । ज्ञायते चाभिजनसदृशेनार्यललनासमुदाचारनिबद्धेन वचनेन पद्मावत्या अन्तःकरणस्योदारभावः । तच्चैतद्दृश्यते राज्ञोऽग्रिम एव वचने ।

**अनुरूपमिति**—अनुरूपं सदृशं, तच्च कुलस्वभावादिकस्येति । एतत् प्रियमित्यादि । यत्खलूक्तं तया भङ्ग्या तदेव स्पष्टतया निर्दिशति—वासवदत्तेत्यादि । आस्यतामुपविश्यताम् । उपवेष्टुमनिच्छन्तीमिव तामुत्प्रेक्ष्य पृच्छति—किमिति ।

**पद्मावती**—अय्यउत्त ! किं मए सह उवविठ्ठो एदं जणं पेक्खिस्सदि ? [ आर्यपुत्र ! किं मया सहोपविष्ट एतं जनं द्रक्ष्यति ? ]

**राजा**—कोऽत्र दोषः ?

**पद्मावती**—अय्यउत्तस्स अवरो परिग्गहो त्ति उदासीणं विअ होदि । [ आर्यपुत्रस्यापरः परिग्रह इत्युदासीनमिव भवति । ]

**राजा**—कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहु-दोषमुत्पादयति । तस्मादास्यताम् ।

**पद्मावती**—जं अय्यउत्तो आणवेदि । ( उपविश्य ) अय्यउत्त ! तादो वा अम्बा वा किं णु खु भणिस्सदि त्ति आविग्गा विअ संवुत्ता । [ यदार्यपुत्र आज्ञापयति । आर्यपुत्र ! तातो वाम्बा वा किं नु खलु भणिष्यतीत्याविग्नेव संवृत्ता । ]

---

**अय्यउत्तेति**—स्वसन्निधानेन तेषां स्वैरालापे प्रतिबन्धः स्यात्कदाचिदित्या-शङ्क्य तथा पृच्छति । एतं जनं, महासेनसकाशादागतौ ताविति ।

**कोऽत्रेति**—अत्र, त्वया सहोपविष्टस्य मे तत्सन्दर्शने ।

**अय्यउत्तस्सेति**—अपरो द्वितीयः, परिग्रहो भार्या । "परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्त्रस्थभास्करे" इत्यजयः । इति हेतोरिति शेषः । उदासीनमवलम्बिततटस्थ्यमिव भवति, अखिलकार्यजातमिति शेषः । अहं च ते द्वितीया भार्या, तौ च जनौ पुनः प्रथमभार्यासम्बद्धौ, एवञ्च यत्खलु वाच्यं तयोस्तन्मत्पुरतः स्पष्टं नैव ब्रूयाताम्, प्रत्युत तौ तटस्थौ सञ्जातौ त्वामपि तथैव कुर्यातामिति मत्सन्निधानं कथमप्यत्रास्वरसवहमेवेति तद्धृदयम् ।

**कलत्रेति**—कलत्रदर्शनं अर्हतीति तम् । जनं, अत्र काञ्चुकीयं धात्रीं च । परिहरति, वर्जयति । तवासन्निधानेनैव सुमहान्दोषः समुत्पद्येतेति तदाशयः । तदयं निष्कर्षः—परकीये जने द्रष्टव्ये समुदाचारभङ्गभीत्या तवास्मात्प्रदेशान्निर्गमनं युक्त-मेव । एतौ पुनर्वासवदत्तासम्बद्धौ सर्वथैवात्र स्त्रीजनदर्शनमर्हतः । वासवदत्ताया यथा तयोः परिचय आसीत्तथैव तवापि स तयोरवश्यमिष्टः । एवं स्थिते तव निर्गमनं दोषमेवोत्पादयेदिति ।

**जं अय्यउत्त इति**—तातः महासेनः, अम्बा अङ्गारवती । किं नु खलु भणिष्यति, अनयोर्मुखेनेति शेषः । कः खलु ताभ्यां सन्देशः प्रेषितः स्यादिति शङ्काकुलं मे हृदयमिति तदाशयः । आविग्ना संत्रस्ता । द्वितीयपरिग्रहं श्रुत्वा भृशं

---

१ ण सिळाहणीअं ( न श्लाघनीयं ) ।

**राजा**—पद्मावति ! एवमेतत्[1] ।

किं वक्ष्यतीति हृदयं परिशङ्कितं मे
कन्या मयाप्यपहृता न च रक्षिता सा ।
भाग्यैश्चलैर्महदवाप्तगुणोपघातः
पुत्रः पितुर्जनितरोष इवास्मि भीतः ॥ ४ ॥

**पद्मावती**—ण किं सक्कं रक्खिदुं पत्तकाले । [ न किं शक्यं रक्षितुं प्राप्तकाले । ]

---

निर्भर्त्सयन्ति वा राज्यप्रत्यायनादिकं श्रुत्वा प्रशंसन्ति वेति संशयेन पर्याकुलाहं संवृत्तेति तस्या आशयः ।

**पद्मावतीति**—एवमेतत्, यथा त्वया परिशङ्कितं तत्तथैवेति ।

**किं वक्ष्यतीति**—किं वक्ष्यति इति, अर्थानुसन्धानात्तातः अम्बा वेत्यापद्यत एव । मे हृदयं परिशङ्कितं भयग्रस्तं, सञ्जातमिति शेषः । तत्सन्दिष्टस्य वस्तुनः स्वमनसानुमानं चिकीर्षन् दोषस्थानं स्वस्य तस्यै कथयति—कन्येत्यादिना । कृतापराधो हि नरः सर्वस्मिन्वस्तुनि चकितचकित इव भूत्वा भयस्थानमेव पश्यतीति सर्वेषां विदितमेवैतत् । अपहृता, असञ्जाते पुनर्विवाहे कौशाम्बीं नीता अपि, सा कन्या वासवदत्ता मया न च रक्षिता, ग्रामदाहप्रसङ्गेन न परिपालिता प्रत्युत स्वहस्ताद्भ्रंशितैव । कन्यापहरणं तु सुमहानेवापराधस्तत्र च पुनस्तस्याः संरक्षणस्य चिन्ता नैव कृतेति अपराधान्तरमेव समुत्पन्नम् । कन्यारक्षणपक्षे तु कथमपि तद्धरणं सह्येत विपरीते च पुनः का तस्य कथेति तदाशयः । चलैश्चञ्चलैः भाग्यैः शुभाशुभकर्मभिः । महत्सु महासेनसदृशेषु आदरणीयेषु जनेषु विषये अवाप्तः लब्धः, गुणानामात्मगतानामुपघातः नाशो येन सः । मम दौर्भाग्यादेवाखिलमिदं सञ्जातमहं च पुनस्तादृशकर्मणा दोषाणां पात्रमभवमिति । तादृशोऽहं, पितुः जनितरोषः उत्पादितकोपः पुत्र इव भीतः अस्मि । गुरुजनानामपराधं कृत्वा पुत्रः सहसा तद्भीत्या तत्सम्मुखे स्थातुं यथा नैव शक्नोति तथैव ममापि विषये इति दिक् । अत्राशङ्क्यमाने तद्दोषे तत्कन्यापहरणं तदरक्षणं च हेतुरित्यवगन्तव्यम् । पुत्रः पितुरित्यादिना च प्रकारान्तरेण तादृशस्यैवार्थस्य प्रतिपादनात्तद्दोषस्यासह्यत्वमुक्तम् । वसन्ततिलकावृत्तमिदम् ॥ ४ ॥

**ण किमिति**—न किं, किमपीत्यर्थः । शक्यं समर्थं रक्षितुं प्राप्तकाले प्राप्तावसरे । समवहितायां कस्यचिद् विनाशसामग्र्यां न किमपि प्रभवति तत्संरक्षण इति भावः । "विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी" इति साधूक्तिदिशावदातमेव तस्या वचनमाभाति ।

---

१ सत्यमेतत् ।

प्रतीहारी—एसो कञ्चुईओ धत्ती अ पडिहारं उवट्ठिदा। [ एष काञ्चुकीयो धात्री च प्रतीहारमुपस्थितौ । ]

राजा—शीघ्रं प्रवेश्यताम् ।

प्रतिहारी—जं भट्टा आणवेदि । [ यद्भर्ताज्ञापयति । ]

( ततः प्रविशति काञ्चुकीयो धात्री प्रतीहारी च । )

काञ्चुकीयः—भोः !

सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुतानिधनं विषादः ।
किं नाम दैव ! भवता न कृतं यदि स्याद्
राज्यं परैरपहृतं कुशलं च देव्याः ॥ ५ ॥

प्रतीहारी—एसो भट्टा, उवसप्पदु अय्यो । [ एष भर्ता, उपसर्पत्वार्यः । ]

---

**एसो इति**—द्रष्टव्यस्य जनस्य पुनर्बहिरवस्थानं चिरं मा भूयादिति समुदाचारभङ्गभयभीता सा पुनरपि तदागमनं श्रावयति—एष इति ।

**शीघ्रमिति**—पद्मावतीसन्निधानं तेनेष्टं तदागमनेन फलितमेव । कालातिपातस्य पुनः किमपि प्रयोजनं नेत्युत्प्रेक्ष्य तां तथाज्ञापयति । एवञ्च शीघ्रशब्दस्य सार्थक्यम् ।

**जं भट्टेति**—तथा करोमीति शेषः ।

**सम्वन्धिराज्यमिति**—इदं सम्वन्धिन आप्तस्योदयनस्य राज्यं एत्य प्राप्य । स्वस्वामिसम्वन्धात्स्वसम्वन्धः शोभते परमसेवकानाम् । मे महान् प्रहर्षः प्रमोदः, सञ्जात इति शेषः । पुनः, अपरस्मिन्नेव क्षणे इति तदर्थः । नृपसुतायाः वासवदत्तायाः निधनं मरणं स्मृत्वा विषादः खिन्नता, सञ्जायते मे 'इति शेषः । एवं प्रमोदखेदयोः परस्परसंवलितत्वात्काप्यवस्था मे हृदयस्य संपन्नेति तदाशयः । भो दैव ! परैः शत्रुभिः अपहृतमात्मसात्कृतं राज्यं, तच्चोदयनस्यैव, कुशलं यथावस्थितं, स्यात् तथा च देव्याः वासवदत्तायाश्च कुशलं स्याद्यदि, अभविष्यदित्यर्थः । तदा भवता त्वया किं नाम न कृतं स्यात्, सर्वमपि सर्वेषामभीष्टं कुर्वाणस्त्वं सर्वथैव कृतकृत्यतयाऽऽदृतोऽभविष्य इत्यर्थः । अथवा भो दैव! यदि राज्यं परैरपहृतं स्यात् ( भवतु नाम, परं ) देव्याश्च कुशलं ( यदि स्यात् ) तदा भवता किं नाम न कृतं स्यात् । तदपि शोभनमपतिष्यदित्यर्थः । राज्याभावेऽपि देव्याः कुशलमस्माकमानन्ददाय्येवाभविष्यदिति । वासवदत्ताभावे लब्धेनापि साम्राज्येन किमिति तस्मादपि वासवदत्तैव सर्वेषामस्माकमिष्टतरेत्यहो तस्यां तत्स्नेहः । वृत्तं वसन्ततिलका ॥ ५ ॥

**एसो इति**—भर्ता उदयनो राजा । उपसर्पतु, समीपं गच्छतु ।

**काञ्चुकीयः**—( उपेत्य ) जयत्वार्यपुत्रः ।

**धात्री**—जेदु भट्टा । [ जयतु भर्ता । ]

**राजा**—( सबहुमानम् ) आर्ये !

पृथिव्यां राजवंश्यानामुदयास्तमयप्रभुः ।
अपि राजा स कुशली मया काङ्क्षितबान्धवः ॥ ६ ॥

**काञ्चुकीयः**—अथ किम् । कुशली महासेनः । इहापि सर्वगतं कुशलं पृच्छति ।

**राजा**—( आसनादुत्थाय ) किमाज्ञापयति महासेनः ?

**काञ्चुकीयः**—सदृशमेतद् वैदेहीपुत्रस्य । नन्वासनस्थेनैव भवता श्रोतव्यो महासेनस्य सन्देशः ।

**राजा**—यदाज्ञापयति महासेनः । ( उपविशति । )

---

**जयत्विति**—जयतु, सर्वोत्कर्षेण वर्ततामिति ।

**जेदु इति**—अचिरोक्तमेवास्या अप्येषणम् । आर्येति श्लोकान्वयि ।

**पृथिव्यामिति**—पृथिव्यां, अखिलेऽस्मिन्पृथ्वीतले । वंशे भवा वंश्याः, राज्ञो वंश्यास्तेषां, राजकुलोत्पन्नानां प्रधानपुरुषाणामित्यर्थः । उदयः उत्कर्षोऽस्तमयो विनाशश्च तयोः प्रभुर्निर्वहणे समर्थः । अन्येषां राज्ञामुदयविनाशकरणे सामर्थ्यं तस्य प्रदर्शितमत एवालौकिकशक्तिमत्त्वं सार्वभौमत्वं च तस्य ध्वन्यते । मया काङ्क्षितश्चासौ बान्धवश्च, मे इष्टः आप्तः इत्यर्थः । अथवा काङ्क्षितं बान्धवं बन्धुतामता वा यस्य सः इत्यपि । मयेत्यस्य काङ्क्षितपदेनान्वयादेकदेशी समासः । स राजा प्रद्योतः । अपि कुशलीति प्रश्नः । बन्धुता च वासवदत्तया सह विवाहं कृत्वा श्वशुरस्वरूपेणापादनीयेति यत् पूर्वं वीणाध्यापनशिक्षासमये हृदये विधृतं तदनुलक्ष्यैवैतादृशं तस्य वचनम् । वृत्तमनुष्टुप् ॥ ६ ॥

**अथ किमिति**—इहापि, कौशाम्ब्याम् । सर्वगतं, सर्वेषामित्यर्थः । कुशलप्रश्नपूर्वका एव सर्वेऽपि प्रायः सन्देशादयः प्रवर्तन्त इति तु सर्वैर्ज्ञायत एव ।

**आसनादिति**—आसनादुत्थाने च हेतुस्तस्यान्तःकरणे विद्यमानो महासेनविषयकोऽत्यादरः । येन च प्रेरितोऽसावुत्थाय तत्सन्देशं श्रोतुमिच्छति ।

**सदृशमेतदिति**—सदृशमनुरूपम् । एतत्, आसनादुत्थानेन दर्शितं विनयादिकम् । वैदेहीति उदयनस्य माता । अनेनैव ज्ञायते सा विदेहराजकन्यकाऽऽसीदिति गुणगणसंपन्ना च । एवञ्च मातृगुणानुरूपमेतत्ते शोभत एवेति तदाशयः ।

---

१ न न त ।

**काञ्चुकीयः**—दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतमिति । कुतः,—

कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते ।
प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥ ७ ॥

**राजा**—आर्य ! सर्वमेतन्महासेनस्य प्रभावः । कुतः,—

अहमवजितः पूर्वं तावत्सुतैः सह लालितः
दृढमपहृता कन्या भूयो मया न च रक्षिता ।
निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता
ननु यदुचितान् वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ॥८॥

---

**दिष्ट्येति**—परैः शत्रुभिरपहृतं राज्यं पुनः प्रत्यानीतं प्रत्याहृतमित्येतत् दिष्ट्या हर्षास्पदमित्यर्थः ।

**कातरा इति**—ये कातराः भीरुकाः । अपि वा, अथवा ये अशक्ताः असमर्थाः । तेपु उत्साहः उद्यमः न जायते नोत्पद्यते । "उत्साहोऽध्यवसायः स्यात्" इत्यमरः । "उत्साहस्तूद्यमे सूत्रे" इत्यपि तट्टीकासु । सत्यामपि शक्तौ ये भीरुकाः ये पुनरभीरुकाः किन्त्वसमर्थास्तेपु द्विविधेष्वपि जनेषु स न दृश्यत इति तदर्थः । अथवा उत्साहस्तदाख्यः शक्तिविशेषः । तथा चामरः—"शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" इति । तत्र उत्सहतेऽनेनेत्युत्साहः । उक्तं हि पुनः 'विक्रमबलमुत्साहशक्तिः' इति । एवञ्च जातस्योत्साहस्य फलं ब्रूते—प्रायेणेति । प्रायेण हि बहुशः सोत्साहैरुत्साहवद्भिरेव नरेन्द्रश्रीः राज्यलक्ष्मीः भुज्यते सेव्यते । प्रस्तुतयानया च सामान्योक्त्याप्रस्तुतस्य राज्यप्रत्यायनादिकस्यार्थस्य ध्वननं, तेन चोदयनगतस्योत्साहगुणस्य प्रतिपादनादप्रस्तुतप्रशंसा । तल्लक्षणं च—"अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया" इति । वृत्तमनुष्टुप् ॥ ७ ॥

**आर्येति**—एतत्, यत्त्वयोक्तं तत्सर्वं महासेनस्य प्रद्योतस्य राज्ञः प्रभावस्तत्प्रभवमित्यर्थः । द्रष्टव्यं शाकुंतले—"राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किंवाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥" इति ।

कुत इत्यनेन तस्मिन्नेव विषये कारणजिज्ञासामुत्थाप्येष्टमेव साधयति—**अहमित्यादिना** । पूर्वं तावत्, यदाहं पूर्वं विन्ध्याटव्यां मृगयाविनोदनार्थं गत आसं तदा । अवजितः, स्वसैनिकैराक्रम्य निगृहीतः । अहं सुतैः स्वपुत्रैः सह दृढमत्यर्थं

**काञ्चुकीयः**—एष महासेनस्य सन्देशः । देव्याः सन्देशमिहात्रभवती कथयिष्यति ।

**राजा**—हा अम्ब !

षोडशान्तःपुरज्येष्ठा पुण्या नगरदेवता ।
मम प्रवासदुःखार्ता माता कुशलिनी ननु ॥ ९ ॥

---

लालितः, स्वपुत्रनिर्विशेषं भोजनपानवस्त्रादिना यथेच्छं संवर्धितः । स्वकन्यायाः कृतेऽनुरूपोऽयं वर इति कृत्वा कृत्रिमनीलहस्तिविलोभनेन प्रद्योत उदयनं निगृह्यान्तःपुरेऽस्थापयदिति पूर्वं चतुर्थाङ्के प्रथमपद्यव्याख्याने संक्षेपेण लिखितं द्रष्टव्यम् । न त्वहं शत्रुरिति कृत्वा कारागारे संस्थाप्य भृशमुद्वेजितः । कन्या वासवदत्ता तद्दुहिता मयापहृता तमपृष्ट्वैव कौशाम्बीं प्रति नीता । भूयः पुनर्न च रक्षिता, मृगयासक्तेन मया लावाणकदाहप्रसङ्गेन दग्धा सा स्वहस्ताद्भ्रंशिता । अत्र रोषसामग्र्यां सत्यामपि स तस्य नेत्यहो तस्य वात्सल्यमिति तदाशयः । तस्याः स्वदुहितुर्वासवदत्तायाः निधनं मरणं श्रुत्वापि, तस्या नाशं प्रति मत्प्रमादमवगम्यापि मयि तथैव पूर्ववत्स्वताऽऽत्मीयता, तेन प्रकटीक्रियत इति शेषः । पूर्वं यथा मय्यस्निह्यत् तथैवाधुनापि, सत्यपि रोषसामग्रीसमवधाने विपरीतमेव मया तद्विषयेऽनुभूयते किमपीति तद्धृदयम् । नन्वित्यवधारणेऽत्र । "ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे" इति विश्वः । उचितान्, स्वसवन्धितयाऽऽसादयितुं योग्यानित्यर्थः । वत्सान्, तदाख्यं स्वस्य देशं, प्राप्तुमधिगन्तुं यत्, प्रबलं कारणसमवधानमभूदिति शेषः । अत्र अस्मिन्विषये नृपः प्रद्योतो हि कारणम् । तस्यैव साहाय्यमेतावत्प्रचुरमभूद्येनाहं वत्सान्प्रत्यानेतुमशक्नवमिति तदाशयः । मत्कृतान्सर्वानप्यपराधान्विस्मृत्य पुनः साहाय्यदानेन मामुपकृतिभिर्लज्जितमेवाकरोदिति सर्वथा तस्यैव महात्मनः प्रभावोऽयं सर्व इति । ज्ञायते चानेन यत्प्रद्योतस्यापि बहुलं साहाय्यमलभतोदयनः स्वशत्रुमारुणिं विनिर्जित्य कृते स्वराज्यप्रत्यायन इति । हरिणीवृत्तमेतत्—तल्लक्षणं च—"नसमरसलागः षड्वेदैर्हयैर्हरिणी मता" इति ॥ ८ ॥

**एष इति**—एषः, दिष्ट्यापहृतमित्यादिर्भुज्यते इत्यन्तः । देव्या अङ्गारवत्याः । अत्रभवती वासवदत्ताधात्री ।

**हा अम्बेति**—श्वश्रूमुद्दिश्याम्बेति सम्बोधनं तस्य तस्यां स्नेहातिरेकं द्योतयति । वासवदत्ताविनाशदुःखितायास्तस्याः स्त्रीहृदयस्यावस्थामनुमाय तथा तस्योद्गारः ।

**षोडशेति**—षोडशानां तत्संख्यापरिमितानामन्तःपुराणां प्रद्योतस्य दाराणां ज्येष्ठा प्रधाना, महिषीत्यर्थः । यथा स्त्र्यगारे भूभुजामन्तःपुरशब्दस्तथैव राजदारेष्वपि सः । तथा ह्युक्तम्—"स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च" । "अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति । पुण्या सच्चारित्र्यवती । नगरस्य देवता यथा लोकैर्भक्त्या पूज्यते तथैव सापीति तद्गुण्यसन्दर्शनादभेदोप-

**धात्री**—अरोआ भट्टिणी भट्टारं सव्वगदं कुसळं पुच्छदि । [ अरोगा भट्टिनी भर्तारं सर्वगतं कुशलं पृच्छति । ]

**राजा**—सर्वगतं कुशलमिति । अम्ब ! ईदृशं कुशलम् ।

**धात्री**—मा दाणिं भट्टा अदिमत्तं सन्तप्पिदुं । [ मेदानीं भर्तातिमात्रं सन्तप्तुम् । ]

**काञ्चुकीयः**—धारयत्वार्यपुत्रः । उपरताप्यनुपरता महासेन-पुत्री एवमनुकम्प्यमानार्यपुत्रेण ।

अथवा—

कः कं शक्तो रक्षितुं मृत्युकाले
रज्जुच्छेदे के घटं धारयन्ति ।

---

चारः । मम प्रवासेन दुःखार्ता अत्यन्तं पीडिता । ममेत्यस्य प्रवासशब्देनान्वया-देकदेशी समासः । प्रवासश्च वासवदत्तामपहृत्य कौशाम्बीं प्रति गमनस्वरूपो मया पूर्वमाचरित इति तदाशयः । तस्मिन्समये तु अङ्गारवती उदयनेन साकं विनष्टां वासवदत्तां श्रुत्वा भृशं विलपन्ती शोकाभिभूता प्रासादादात्मानं पातयितुकामा बभू-वेत्यादि प्रतिज्ञानाटिकायां स्पष्टम् । माता अङ्गारवती । कुशलिनी नन्विति प्रश्नः । वृत्तमनुष्टुप् ॥ ९ ॥

**अरोगेति**—अरोगा कुशलिनी, भट्टिन्यङ्गारवती । भर्तारं त्वाम् ।

**सर्वगतमिति**—सर्वगतं सर्वविषयकम् । कुशलमिति, कुशलं पृच्छति नन्विति भावः । ईदृशं, वासवदत्ताभावे यथा दृश्यते तादृशमिदमस्माकं तदिति । यत्ख-ल्वस्माकं सर्वेषां कुशलं तदकुशलमिवाभाति वासवदत्ताविरहे, एवं च नाममात्रेण कुशला वयं न पुनर्वस्तुतस्तथेति तदर्थः । अम्बेत्यादिना तस्य पुनरपि शोकोद्रे-कोऽवगन्तव्यः ।

**मा दाणिमिति**—मा सन्तप्तुमित्यपाणिनीयः प्रयोगः । 'सन्तप्यतु' इति तूचितं भवेत् तत्स्थले । शोकोद्रिक्तस्य तस्य तस्याः सान्त्वनपरमिदं वचनम् ।

**धारयत्विति**—धारयतु, आत्मानमिति शेषः, धैर्यमवलम्ब्यतामिति । उप-रतापि मृतापि अनुपरता न मृता महासेनपुत्री वासवदत्ता । एवं दृश्यमानप्रकारेण अनुकम्प्यमाना, प्रेम्णा हृदि धार्यमाणेति तदर्थः । द्रष्टव्यं प्रथमाङ्के ब्रह्मचारिवचने "भर्तृस्नेहात्सा हि दग्धाप्यदग्धा" इति । मालतीमाधवेऽपि—"मालती—हा दयित माधव ! परलोकगतोऽपि युष्माभिः स्मर्तव्योऽयं जनः । न खलु स उपरतो यस्य वल्लभो जनः स्मरति ।" इति ।

नैतस्मिन्विषये यत्किञ्चिदपि मानवः प्रभवतीत्याशयेनाह—**कः कमिति**—

---

१ °सन्तप्पिअ । ईदिसं दाणि एदं । (°सन्तप्य । ईदृशमिदानीमेतत्) ।

एवं लोकस्तुल्यधर्मा वनानां
काले काले छिद्यते रुह्यते च ॥ १० ॥

**राजा**—आर्ये ! मा मैवं,—

महासेनस्य दुहिता शिष्या देवी च मे प्रिया ।
कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥ ११ ॥

**धात्री**—आह भट्टिणी—उवरदा वासवदत्ता । मम वा

---

मृत्युकाले, प्राप्ते सतीति शेषः । कः, समर्थो वासमर्थो वेति । कं, प्रेम्णा हृदि धारितमपि । रक्षितुं मृत्योः परित्रातुं शक्तः, न कोऽपीति भावः । "सुरक्षितं दैवहतं विनश्यति" इति साधूक्तिरत्र विषये द्रष्टव्या । मृत्योः काल एव प्रथमं सर्वेषां दुरधिगमस्ततः पुनः का खलु प्रत्याशा तस्य तरणोपाये इति तदभिप्रायः । रज्वाः छेदे सति घटं के धारयन्ति, रज्वा हि घटं बद्ध्वा घटीयंत्रसाहाय्येन वयं जलं कूपादुद्धरामः, तस्मिंश्छिन्ने के पुनर्वयं किं च घटीयन्त्रमिति । तथैवादृष्टसहचरा जीवा बद्धाः सर्वथैव तदनुकूलमेव व्यवहरन्तीति नात्र पुनः कृतमतिभिः खेदः क्रियत इति । एवं लोकः प्राणी वनानां तुल्यधर्मा, तुल्यः समानो धर्मो यस्य स इत्येकदेश्यन्वयः । "धर्मादनिच् केवलात्" ( पा० सू० ५।४।१२४ ) केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात् । समानो धर्मस्त्वग्रिमे पादे कथ्यत एव । काले काले समये समये छिद्यते रुह्यते च । अत्र वचनविभक्तिविपरिणामेन वनमित्यापद्यत एव । काष्ठानयनार्थं वनं गतैर्लोकैस्तदहर्निशं छिद्यत इति तु दृष्टचरमेव । छिन्नमपि पुनस्तत्कालान्तरेण वर्धत एवेत्यपि । अथवा छिद्यते विच्छिन्नं भवति, रुह्यते रोहति वर्धते वा । "कर्मवत्कर्मणा तुल्यक्रियः" ( पा० सू० ३।१।८७ ) कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । भिद्यते काष्ठम् । इति कर्मवद्भावादात्मनेपदम् । एवं च यथा वनच्छेदे तद्वर्धने वादृष्टमेव कारणं तथैवात्रापि विषये इति न खलु सद्भिः सन्तापः कार्य इति तदाशयः । शालिनीवृत्तमेतत् ॥ १० ॥

**आर्येति**—मा मैवं उक्तप्रकारेण भणेति शेषः । मया खलु यद्वशं सन्तप्यते तदुचितमेवेत्याह—

**महासेनस्येति**—महासेनस्य, तादृशवात्सल्यमूर्तेरिति यावत्, दुहिता कन्यका । शिष्या, वीणावादनाध्यापनहेतुना मे संपन्नान्तेवासिनी । मे प्रिया देवी महिषी चेति प्रत्येकं तत्त्वेनेष्टतमा सा वासवदत्ता मया देहान्तरेष्वपि अन्यजन्मस्वपि कथं न स्मर्तुं शक्या, न केवलमस्मिन्नेव जन्मनि किन्त्वागामिष्वपि जन्मसु सा मयैतैर्हेतुभिरजस्रं हृदि धृत्वा स्मरणीयैवेति तदभिप्रायः । वृत्तमनुष्टुप् ॥ ११ ॥

**आह भट्टिणीति**—प्रथममेव, कृत्रिमनीलहस्तिप्रयोगेण त्वं निगृहीतस्ततः

महासेणस्स वा जादिसा गोवाळअपाळआ तादिसो एव्व तुमं पुढमं एव्व अभिप्पेदो जामादुअत्ति । एदण्णिमित्तं उज्जइणिं आणीदो । अणग्गिसक्खिअं वीणाववदेसेण दिण्णा । अत्तणो चवळदाए अणिव्वुत्तविवाहमङ्गळो एव्व गदो । अह अ अह्मेहिं तव अ वासवदत्ताए अ पडिकिदिं चित्तफळआए आळिहिअ विवाहो णिव्वुत्तो । एसा चित्तफळआ तव सआसं पेसिदा । एदं पेक्खिअ णिव्वुदो होहि । [ आह भट्टिनी—उपरता वासवदत्ता । मम वा महासेनस्य वा यादृशौ गोपालकपालकौ तादृश एव त्वं प्रथममेवाभिप्रेतो जामातेति । एतन्निमित्तमुज्जयिनीमानीतः । अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता । आत्मनश्चपलतयानिर्वृत्तविवाहमङ्गल एव गतः । अथ चावाभ्यां तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः । एषा चित्रफलका तव सकाशं प्रेषिता । एतां दृष्ट्वा निर्वृतो भव । ]

---

प्रागेवेति । ज्ञायतेऽनेन ताभ्यामसौ स्वकन्यायाः कृते चिरादेव सङ्कल्पितो वर आसीदिति । तादृश एवेति—सुतनिर्विशेषतया अभिप्रेतः इष्टः । एतन्निमित्तं, वासवदत्तापाणिग्रहणकल्पनयेति । उज्जयिनीमानीतः, कृत्रिमहस्तिच्छद्मना अस्मत्सैनिकैर्वन्दिग्राहं गृहीत इति तदर्थः । न अग्निः साक्षी यस्मिन्कर्मणि तथा, प्रथममेवाग्निसाक्षिके विवाहे प्रवृत्ते कदाचित्कुत्रापि प्रतिबन्धः सम्पद्येतेति कृत्वा रहस्येव त्वत्समीपं सा प्रापितेति । तच्चैतत्कृतं वीणावादनाध्यापनमिषेण । एतदर्थमेव त्वं तत्कर्मणि आवाभ्यां नियुक्तो, येन च परस्परस्नेहविवर्धनेऽखिलं सुगममभूत् । वीणावादनशिक्षा तु अप्रधानमासीत्कार्यमस्मद्दृष्ट्या परस्परस्नेहवर्धनरूपं च प्रधानमिति । आत्मनश्चपलतयेति, युवयोः सञ्जातं परस्परस्नेहं दृष्ट्वा वयं वस्तुतोऽग्निसाक्षिके विवाहे कृतमानसौ आस्वैव किन्तु केनापि कारणेन मनसोऽस्थिरतया त्वं ततः पूर्वमेव तां गृहीत्वोज्जयिनीतो निरगच्छ इति भावः । प्रतिकृतिं प्रतिच्छायां आलिख्य—युवयोरभावे मनसः शान्तिमापादयितुं निश्चितं च वस्तु निर्वापयितुमावाभ्यां चित्रफलके युवयोः प्रतिच्छायां लिखित्वा तथाभूतयोर्युवयोर्विवाहः कारितः । "प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिः" इत्यमरः । एतां चित्रफलकां दृष्ट्वा निर्वृतोऽधिगतशान्तिर्भव । इदमेवैकं साधनमावाभ्यामुत्प्रेक्षितं येन खल्वंशेनापि त्वं वासवदत्तौत्सुक्यं विहाय शान्तिं लप्स्यसे ।

**राजा**—अहो अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या ।

वाक्यमेतत् प्रियतरं राज्यलाभशतादपि ।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः ॥ १२ ॥

**पद्मावती**—अय्यउत्त ! चित्तगदं गुरुअणं पेक्खिअ अभिवादेदुं इच्छामि । [ आर्यपुत्र ! चित्रगतं गुरुजनं दृष्ट्वाभिवादयितुमिच्छामि । ]

**धात्री**—पेक्खदु पेक्खदु भट्टिदारिआ । ( चित्रफलकां दर्शयति । ) [ पश्यतु पश्यतु भर्तृदारिका । ]

**पद्मावती**—( दृष्ट्वा आत्मगतम् ) हं ! अदिसदिसी खु इअं अय्याए आवन्तिआए । ( प्रकाशम् ) अय्यउत्त ! सदिसी खु इअं अय्याए ? [ हम् ! अतिसदृशी खल्वियमार्याया आवन्तिकायाः । आर्यपुत्र ! सदृशी खल्वियमार्यायाः ? ]

---

**अहो इति**—अतिस्निग्धं हार्दिकं, अनुरूपं स्वयोग्यतासदृशम् । तत्रभवत्या-ज्ञारवत्या ।

**वाक्यमिति**—एतद्वाक्यं, प्रेषितोऽयं सर्वोऽपि सन्देश इति तदर्थः । राज्यलाभशतादित्यत्र राज्यशतलाभादित्यभविष्यत्तदा तत्समीचीनमेवाभाति । तस्मादपि प्रियतरोऽयं तयोः सन्देश इति तदभिप्रायः । अपराद्धेषु अपराधश्च वासवदत्तानाशे स्वप्रमादस्वरूपः । न विस्मृतः, अपराद्धेषु जनेषु स्नेहः पुनरून एवोत्तरोत्तरं भवति । मम विषये तन्नेत्यहो तयोर्महिमेति भावः । वृत्तमनुष्टुप् ॥ १२ ॥

**अय्यउत्तेति**—चित्रगतं चित्रे लिखितं, गुरुजनं वासवदत्तामिति यावत् । उदयनस्य स्वभर्तुः सा प्रथमा पत्नीति कृत्वा बहुमानप्रयुक्तं तथा वचनम् । सपत्नीविषयेऽपि तादृशाचरणेन धन्या खलु पद्मावत्युदारहृदयेति न खलु नोच्येत येन केनापि । गुरुजनानां प्रथमे सन्दर्शने सति अभिवादनेच्छा प्रवर्तत इति तु सर्वजनीनमेव ।

**पेक्खदु इति**—तादृशं तस्या हृदयमवगम्य चित्रफलकार्पणे धात्र्यास्त्वरा ज्ञायते 'पेक्खदु पेक्खदु' इति द्विर्वचनेन ।

**हमिति**—हमित्याश्चर्ये । तच्च आवन्तिकासादृश्यं चित्रफलकगतायां वासवदत्तायां समीक्ष्येति विज्ञेयम् । अतिसदृशी, अत्यर्थं संवदन्तीत्यर्थः । इयं, आकृतिर्वासवदत्ता चेति शेषः । सदृशी, यथावल्लिखिता खल्वियं आकृतिरार्याया वासवदत्ताया इति प्रश्नकाकुः । यथाऽत्र चित्रे दृश्यते तथैव वा सा आसीदथवा कोऽपि विशेषोऽस्तीति तत्प्रश्नाशयः ।

राजा—न सदृशी । सैवेति मन्ये । भोः ! कष्टम्,—

अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम् ।
इदं च मुखमाधुर्यं कथं दूषितमग्निना ॥ १३ ॥

पद्मावती—अय्यउत्तस्स पडिकिदिं पेक्खिअ जाणामि इअं अय्याए सदिसी ण वेत्ति । [ आर्यपुत्रस्य प्रतिकृतिं दृष्ट्वा जानामीयमार्यया सदृशी न वेति । ]

धात्री—पेक्खदु पेक्खदु भट्टिदारिआ । [ पश्यतु पश्यतु भर्तृदारिका । ]

पद्मावती—( दृष्ट्वा ) अय्यउत्तस्स पडिकिदीए सदिसदाए जाणामि इअं अय्याए सदिसी त्ति । [ आर्यपुत्रस्य प्रतिकृत्याः सदृशतया जानामीयमार्यया सदृशीति । ]

---

न सदृशीति—न सदृशी, न केवलं संवदन्ती इयं प्रतिकृतिस्तस्याः ( किन्तु ) सैव वासवदत्तैव इति मन्ये । चित्रस्य यथावल्लिखितत्वादल्पमपि भेदमसहिष्णुस्तथाऽऽह । द्वयोर्भिन्नयोः पदार्थयोरात्यन्तिकसादृश्यहेतुतयाभेदोपचारः क्रियत इति सुप्रसिद्धमेव । अत्र च पुनः सा प्रतिकृतिर्वासवदत्ताया एवेति तथाभूतोऽभेदोपचारस्तु स्तुत्य एव । वासवदत्तातादूप्यं चित्रे वीक्ष्य पुनरपि शोकाभिभूत आह—भोः ! कष्टमिति ।

अस्येति—अस्य, चित्रे दृश्यमानस्य, वस्तुतः पुरा वासवदत्तायां दृष्टस्यापि । स्निग्धस्य स्पृहणीयस्य वर्णस्य स्वरूपस्य । दारुणा, ग्रामदाहप्रसङ्गे प्रदीप्तकठोराग्निसंस्पृष्टत्वाद्भयङ्करा । विपत्तिर्नाशरूपा कथं, समपद्यतेति शेषः । इदं, चित्रे दृश्यमानं वासवदत्तायामनुभूतं च । मुखस्य माधुर्यं सौन्दर्यं कथमग्निना दूषितं विनाशितम् । अतिदारुणं कर्मैतत्सर्वमग्निनाक्रियतेति भावः । वृत्तमनुष्टुप् ॥ १३ ॥

वासवदत्ताभावे चित्रकारस्य कौशल्यं वासवदत्ताचित्रे तादृशं न दृश्येत, तच्च पुनरुदयनस्य तस्मिन्सौकर्येणेति कृत्वा वासवदत्ताचित्रे उपस्थितामाशङ्कामप्युद्धर्तुमिच्छन्ती आह—अय्यउत्तस्सेति । आर्यपुत्रस्य भवतः प्रतिकृतिं दृष्ट्वा, तव चित्रे तव सादृश्यमुपलभ्य जानामीयमपि प्रतिकृतिर्वासवदत्ताया अपि सा यथावदेव लिखितेति । एकेनैव चित्रकारेण लिखितत्वात्तयोः तदेतज्ज्ञातुं सुकरमेवेति तदाशयः ।

पेक्खदु इति—पश्यत्विति चित्रफलकस्योपनयने प्रयत्नः । एतदनन्तरं चित्रफलकामर्पयतीत्यावश्यकम् ।

अय्यउत्तस्सेति—आर्यपुत्रस्य प्रतिकृतिरार्यपुत्रमत्यर्थं संवदति, तेन च

**राजा**—देवि ! चित्रदर्शनात्प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि । किमिदम् ?

**पद्मावती**—अय्यउत्त ! इमाए पडिकिदीए सदिशी इह एव्व पडिवसदि । [ आर्यपुत्र ! अस्याः प्रतिकृत्याः सदृशीहैव प्रतिवसति । ]

**राजा**— किं वासवदत्तायाः ?

**पद्मावती**—आम । [ आम् । ]

**राजा**—तेन हि शीघ्रमानीयताम् ।

**पद्मावती**—अय्यउत्त ! मम कण्णाभावे केणवि बह्मणेण मम भइणिअत्ति ण्णासो णिक्खित्तो । पोसिदभत्तुआ परपुरुसदंसणं परिहरदि । ता अय्यं मए सह आअदं पेक्खिअ जाणादु अय्यउत्तो । [ आर्यपुत्र ! मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्तः । प्रोषितभर्तृका परपुरुषदर्शनं परिहरति । तदार्यां मया सहागतां दृष्ट्वा जानात्वार्यपुत्रः । ]

---

जानामि, अनुमिनोमि निश्चिनोमि वा यदियमपि वासवदत्तामिति । तत्र चैकस्यैव चित्रकारस्य कृतित्वं हेतुरित्यवगन्तव्यम् ।

**देवीति**—प्रहृष्टा सञ्जातहर्षा उद्विग्ना खिन्ना च । हर्षस्य च कारणं प्रायः आवन्तिकासादृश्येन चित्रे वासवदत्तासद्भावशङ्कैवेत्याभाति । खेदस्य च तत्प्रामुख्येनादरणीयेन जनेन साकं सखीनिर्विशेषतया सर्वसाधारण्येन कृतो व्यवहार इति । एतच्च ज्ञायते पद्मावत्या अग्रिमेण वचनेन—"अहो आर्या खल्वियम् । आर्ये ! सखीजनसमुदाचारेणाजानन्त्यातिक्रान्तः समुदाचारः, तच्छीर्षेण प्रसादयामि" इत्यादिना । किमिदं, किं कारणमत्रेति तदर्थः ।

**अय्यउत्तेति**—अस्याः प्रतिकृत्याः, वासवदत्तायास्तस्या इति यावत् । इहैवास्मत्प्रासाद एव ।

**किमिति**—किं वासवदत्तायाः, प्रतिकृत्याः सदृशी प्रतिवसतीत्यर्थानुसन्धानादनुवर्तते ।

**आमेति**—आमित्यङ्गीकारे, अथ किमिति तदर्थः ।

**तेन हीति**—तेन हि, तस्माद्धेतोः । आनीयतां सा या त्वया वासवदत्तासदृश्युत्प्रेक्षते इति आशयः ।

**अय्यउत्तेति**—मम कन्याभावे, विवाहकालात्प्रागिति तदर्थः । मम भगिनिकेति, ममाख्यायेति शेषः । न्यासो निक्षिप्तः, निक्षिप्तेत्यनेनैव निर्वाहोऽभ-

राजा—

यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति ।
परस्परगता लोके दृश्यते तुल्यरूपता ॥ १४ ॥

( प्रविश्य )

प्रतीहारी—जेदु भट्टा । एसो उज्जइणीओ बह्मणो, भट्टिणीए हत्थे मम भइणिअत्ति ण्णासो निक्खित्तो, तं पडिग्गहिदुं पडिहारं उवट्ठिदो । [ जयतु भर्ता । एष उज्जयिनीयो ब्राह्मणः, भट्टिन्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तः, तं प्रतिग्रहीतुं प्रतीहारमुपस्थितः । ]

राजा—पद्मावति ! किं नु स ब्राह्मणः ?

---

विष्यत् । यतश्च निपूर्वकः क्षिप्–धातुर्निक्षेपणार्थे वर्तते । अथवा न्यस्तेत्यपि कार्यनिर्वाहकमभविष्यदिति विज्ञेयम् ! प्रोषितो दूरदेशं गतो भर्ता यस्याः सा इत्यादिनिर्वचनं प्रथमाङ्कव्याख्याने ( २१ पृष्ठे ) द्रष्टव्यम् । परिहरति वर्जयति । आर्या वासवदत्तासदृशीं ताम् । जानातु, सत्यं वासवदत्तैव सा वान्या काचित्स्त्री इति । आर्यपुत्रस्त्वां द्रष्टुमिच्छतीति कृत्वा यदि आनीयेत तदा समुदाचारभङ्गप्रसङ्गेन साऽऽविग्ना स्यादेवेति मया सह विस्रब्धं सचरन्तीं तां तयादृष्ट एव भवान् पश्यत्वित्यभिप्रायः । अथवा "तदार्या ( वासवदत्ताधात्री ) पश्यतु सदृशी न वेति" इति पाठः समीचीनः ।

**यदीति**—यदि विप्रस्य ब्राह्मणस्य भगिनी ( तदा सा ) व्यक्तं स्पष्टतया अन्या, वासवदत्ताया इति शेषः, भविष्यति । वासवदत्ता ब्राह्मणभगिनी च परस्परं विरुद्धं खल्वेतत् । वासवदत्ताभिन्नत्वप्रकल्पने ब्राह्मणभगिनीत्वं प्रयोजकं विज्ञेयम् । किमतः परं तस्या दर्शनेनादर्शनेन वा, सुदूरैव मे वासवदत्ताप्रत्याशेति तदभिप्रायः । तत्रैव कारणमवतारयति—परस्परेत्यादिना । लोके जनेषु परस्परगता तुल्यरूपता रूपसदृशता दृश्यते । जगति हि कस्यचिज्जनस्याकृतिरन्यस्य कस्यापि जनस्य तां संवदतीति दृष्टचरमेवेति तदाशयः । वृत्तमनुष्टुप् ॥ १४ ॥

**जेदु भट्टा इति**—'एसो' इत्यादिना प्रतीहार्या वचनेन ज्ञायते यद्यौगन्धरायणेन प्रतीहारमागत्य, "उज्जयिनीयोऽहं ब्राह्मणः, ते भट्टिन्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तस्तं प्रतिग्रहीतुमुपस्थितोऽस्मि" इत्युद्घोषणं कृतमिति प्रकल्प्यते । तं न्यासं प्रतिग्रहीतुं स्वहस्तगतं कर्तुम् ।

**पद्मावतीति**—स ब्राह्मणः, येन त्वत्समीपे न्यासः क्षिप्तः ।

**पद्मावती**—होदव्वं । [ भवितव्यम् । ]

**राजा**—तेन हि शीघ्रं प्रवेश्यतामभ्यन्तरसमुदाचारेण स ब्राह्मणः ।

**प्रतीहारी**—जं भट्टा आणवेदि । [ यद्भर्ताज्ञापयति । ]

( निष्क्रान्ता । )

**राजा**—पद्मावति ! त्वमपि तामानय ।

**पद्मावती**—जं अय्यउत्तो आणवेदि । [ यदार्यपुत्र आज्ञापयति । ] ( निष्क्रान्ता । )

( ततः प्रविशति यौगन्धरायणः प्रतीहारी च । )

**यौगन्धरायणः**—( आत्मगतम् ) भोः ।

प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं
कामं मया कृतमिदं हितमित्यवेक्ष्य ।
सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥ १५ ॥

---

**होदव्वमिति**—भवितव्यम्, तेनैव ब्राह्मणेनेति शेषः ।

**शीघ्रमिति**—अभ्यन्तरेऽन्तर्गृहे कर्तव्येन परिपालनीयेन वा समुदाचारेण स्वागतोपचरितादिना । केवलं वासवदत्तारूपसादृश्यमेव तद्भगिनिकायां ज्ञात्वा तत्रैवमत्यादर इत्यहो वासवदत्तायां तत्स्नेहः ।

**पद्मावतीति**—तां, वासवदत्तासदृशीं स्त्रियम् । वासवदत्ताप्रकाशावसरे यौगन्धरायणस्याप्यवस्थानस्य तत्रात्यावश्यकत्वात्तत्प्रवेशमाह—**तत** इत्यादिना ।

**प्रच्छाद्येति**—नृपतेरुदयनस्य हितार्थं कल्याणाय । राजमहिषीं कृताभिषेकां पत्नीं वासवदत्तां । प्रच्छाद्य लावाणकग्रामदाहस्यालीकोद्घोषणयाऽऽवन्तिकावेषं दत्वा तदवस्थानमप्रकाश्य । नृपतेर्हितस्य स्वरूपं तु पद्मावत्या साकं तस्योद्वाहं घटयित्वा दर्शकस्य साहाय्येन स्वराज्यादिकस्य शत्रुतः प्रत्यायनमित्यवगन्तव्यम् । मया इदं, पद्मावतीपरिणयस्वरूपं वासवदत्तागोपनस्वरूपं च कार्यं हितं कल्याणकरं, राज्ञ इति शेषः । इत्यवेक्ष्य इत्युत्प्रेक्ष्य । काममुदयनभक्तिपरवशतया निःशङ्कं कृतमनुष्ठितम् । मम कर्मणि स्वीकृतकार्ये, सिद्धेऽपि पद्मावतीविवाहपूर्वकेन दर्शकस्य साहाय्येन, राज्यलाभप्रसङ्गेण च संपादितस्वादुफलेऽपि नाम । असौ पार्थिव उदयनः किं वक्ष्यति, एतत्सर्वं तद्धितायैव कृतं वासवदत्तासंगोपनादिकमस्माभिरङ्गीकृतं

---

१ ब्राह्मणवेषो ।

**प्रतीहारी**—[1]एसो भट्टा । उवसप्पदु अय्यो । [ एष भर्ता । उपसर्पत्वार्यः । ]

**यौगन्धरायणः**—( उपसृत्य ) जयतु भवान् जयतु ।

**राजा**—श्रुतपूर्व इव स्वरः । भो ब्राह्मण ! किं भवतः स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता ?

**यौगन्धरायणः**—अथ किम् ।

**राजा**—तेन हि त्वर्यतां त्वर्यतामार्यस्य भगिनिका ।

**प्रतीहारी**—जं भट्टा आणवेदि । [ यद्भर्ताज्ञापयति । ] ( निष्क्रान्ता । )

( ततः प्रविशति पद्मावती आवन्तिका प्रतीहारी च । )

**पद्मावती**—एदु एदु अय्या । पिअं दे णिवेदेमि । [ एत्वेत्वार्या । प्रियं ते निवेदयामि । ]

---

कार्यजातमवगत्य किं स्तोष्यति निर्भर्त्सयिष्यति वेति चिन्तयित्वेत्यर्थः । मे हृदयं परिशङ्कितं पर्याकुलं, भवतीति शेषः । किं वक्ष्यतीति चतुर्थः पादोऽनवीकृतोऽस्मिन्नेवाङ्के चतुर्थे पद्ये उपलभ्यते । एतच्च बहुलं दृश्यतेऽत्र नाटके । तथा च पुनर्विदूषकस्य वचने "अविहा वासवदत्ता" इत्यादिवाक्यजातं यथा चतुर्थेऽङ्के तथैव पञ्चमेऽपि तस्मिन्निति । वसन्ततिलकावृत्तमिदम् ॥ १५ ॥

**एसो इति**—भर्ता उदयनः । उपसर्पतु, समीपं गच्छतु ।

**जयत्विति**—ब्राह्मणसमुदाचारं परिपालयन्नसौ तादृशं जयवाक्यमुच्चारयति । वस्तुतः "जयतु स्वामी जयतु" इत्येव तदभविष्यत् । द्रष्टव्यं ह्यग्रे स्वस्य प्रकटनादूर्ध्वं तेनोक्तं "जयतु स्वामी" इति ।

**श्रुतपूर्व इति**—पूर्वं श्रुतः श्रुतपूर्वः । श्रुतपूर्व इति वाक्यं स्वगतं भवितुं योग्यमन्यच्चावशिष्टं वचनं प्रकाशम् ।

**अथ किमिति**—अथ किमित्यङ्गीकारे ।

**तेन हीति**—त्वर्यतां, त्वरयानीयताम् ।

**जं भट्टेति** ॥

**एदु इति**—प्रियं ते इति सामान्यवचनेन तदौत्सुक्यं वर्धयित्वाग्रे नेतुं प्रयत्नः ।

---

१ एदु एदु अय्यो ।

**आवन्तिका**—किं किं ? [ किं किम् ? ]

**पद्मावती**—भादा दे आअदो। [ भ्राता ते आगतः। ]

**आवन्तिका**—दिट्ठिआ इदाणिं पि सुमरदि। [ दिष्ट्येदानीमपि स्मरति। ]

**पद्मावती**—(उपसृत्य) जेदु अय्यउत्तो। एसो ण्णासो। [ जयत्वार्यपुत्रः। एष न्यासः। ]

**राजा**—निर्यातय पद्मावति! साक्षिमन्न्यासो निर्यातयितव्यः। इहात्रभवान् रैभ्यः अत्रभवती चाधिकरणं भविष्यतः।

**पद्मावती**—अय्य! णीअदां दाणिं अय्या। [ आर्य! नीयतामिदानीमार्या। ]

---

**किमिति**—किं तत्प्रियं यत्त्वं कथयितुमुद्यतासीति। अत्र 'आवन्तिका' इति कवेरनवधानतां दर्शयति। यतः पूर्वं सर्वत्रैव 'वासवदत्ता'-पदेन तेन निर्वाहः कृतः। अधुना ब्राह्मणस्थले 'यौगन्धरायण'—पदेन पुरापि तथैवेति तत्र तु योग्यमेवेति द्रष्टव्यम्।

**भादेति**—कथनीयस्य प्रियवस्तुनः स्वरूपमिदम्। भ्राता बन्धुः, येन त्वं मत्समीपं न्यस्ता।

**दिट्ठिआ इति**—दिष्ट्येति हर्षे। इदानीमपि स्मरति, न पूर्वमिव सर्वथैव मां विस्मरतीति यावत्। चिरकालस्मरणेन तथाभूतस्तस्या उद्गारः।

**जेदु इति**—एष इति समीपं स्थितः। न्यासः निक्षेपः, अनेन ब्राह्मणेन ममाधीनः कृतः। पूर्वं कञ्चित्कालं परिपालयितुं ममाधीनः कृत इति शेषः।

**निर्यातयेति**—निर्यातय प्रत्यर्पय, न्यासमिति शेषः। साक्षिमत् साक्षियुक्तं यथा स्यात्तथा न्यासो निर्यातयितव्यः प्रत्यर्पितव्यः। न्यासप्रत्यर्पणकाले साक्षिणोऽस्त्यत्यावश्यकता। रहःकृते तस्मिन्पुनः कदाचिल्लोभमोहादिकेनाविष्टः कश्चित्पुनरपि न्यासप्रत्यर्पणे त्वरयन् महति सङ्कटे पातयत्यन्याञ्जनानिति व्यवहारनीतिबीजमिति हृदयम्। अत्रभवती वसुन्धरा वासवदत्ताधात्री। अधिकरणं व्यवहारस्य द्रष्टारौ, साक्षिणौ इति यावत् भविष्यतः। तथा चोक्तम् 'ऋणादानादीन्यष्टादश विवादस्थानानि व्यवहाराः। तेषां द्रष्टरि निर्णेतरि।' एवं चैते एव व्यवहारा यत्राधिक्रियन्ते विचार्यन्ते तदधिकरणं न्यायपरिषदिति।

**अय्येति**—आर्या, न्यासत्वेन दत्ता ते भगिनी। निर्वर्ण्य सूक्ष्मतया दृष्ट्वा। जवनिकासद्भावेन वासवदत्तामुखे तावान् तत्र तस्याः प्रयासः।

---

१ अम्ब! अय्य! इअं दाणिं अय्या। (अम्ब! आर्य! इयमिदानीमार्या)।

**धात्री**—( आवन्तिकां निर्वर्ण्य ) अम्मो भट्टिदारिआ वासवदत्ता ! [ अम्मो भर्तृदारिका वासवदत्ता ! ]

**राजा**—कथं महासेनपुत्री ? देवि ! प्रविश त्वमभ्यन्तरं पद्मावत्या सह ।

**यौगन्धरायणः**—न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा ।

**राजा**—किं भवानाह ? महासेनपुत्री खल्वेषा ।

**यौगन्धरायणः**—भो राजन् !

भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥ १६ ॥

**राजा**—भवतु, पश्यामस्तावद् रूपसादृश्यम् । संक्षिप्यतां यवनिका ।

---

**अम्मो इति**—अम्मो इत्याश्चर्ये । तच्च पुनर्दग्धाभिमतां वासवदत्तां वीक्ष्येति ।

**कथमिति**—देवि ! वासवदत्ते ! अभ्यन्तरमन्तर्गृहम् । तच्चैतद्राजस्त्रीसमुदाचारपरिपालनार्थम् । परकीयः खलु ब्राह्मणस्तत्रासीदिति तत्र हेतुः ।

**न खल्विति**—तया साकं स्वस्यापि प्राकट्यमिच्छन् यौगन्धरायणस्तदानीं तत्प्रवेशं प्रतिषिध्यति ।

**किमिति**—किं, अविचारितमिति यावत् । धात्र्या वासवदत्तारूपे चिरपरिचितत्वात्तद्वचने निःसन्देहः सन् तथा वक्ति ।

**भारतानामिति**—भो राजन्, त्वं भारतानां भरतवंशजानां पाण्डवानां कुले जातः समुत्पन्नः । विनीतः शास्त्रोपदेशादिना संस्कृतचित्तः । भरतश्च दुष्यन्तस्य शकुन्तलायां जातः पुत्रः कौरवपाण्डवानां वंशस्य मूलः पुरुषः । अर्जुनसूनोरभिमन्योः पञ्चविंशः पुरुषोऽसौ राजोदयन इति सर्वं विष्णुपुराणे स्पष्टम् । ज्ञानवान् बुद्धिमान्, शुचिः सच्चरित्रः । वर्तसे इति शेषः । तत् तस्माद्धेतोः । राजधर्मस्य राजभिरङ्गीकरणीयस्य धर्मस्य देशिकः प्रवर्तयिता शिक्षयिता वा त्वं बलात्प्रसभं हर्तुं नार्हसि, तामिति शेषः । राजधर्मप्रवर्तकस्य ते श्रेष्ठस्य सर्वथानुचितमिदं कर्मेति भावः । वृत्तमनुष्टुप् ॥ १६ ॥

**भवत्विति**—भवतु, तिष्ठतु तावदिदमभ्यन्तरप्रवेशनं यदि सत्यं ते इयं भगिनी न पुनर्वासवदत्ता इति तदर्थः । न ते भगिन्या बलाद्धरणं मया क्रियते वासवदत्ताभिमानेन मया तथाऽऽदिष्टम् । अस्तु तावद्रूपसादृश्यदर्शने न कापि पुनर्हानिरिति विचिन्त्याह—पश्याम इति । पश्यामः परीक्षामहे इति यावत् ।

**यौगन्धरायणः**—जयतु स्वामी।

**वासवदत्ता**—जेदु अय्यउत्तो। [ जयत्वार्यपुत्रः। ]

**राजा**—अये असौ यौगन्धरायणः, इयं महासेनपुत्री !

किं नु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया।
अनयाप्येवमेवाहं दृष्टया वञ्चितस्तदा ॥ १७ ॥

**यौगन्धरायणः**—स्वामिन्, देव्यपनयेन कृतापराधः खल्वहम्। तत् क्षन्तुमर्हति स्वामी। ( इति पादयोः पतति। )

---

संक्षिप्यतां सङ्कोच्यतां यवनिका अवगुण्ठनम्। परपुरुषदर्शनं परिहरन्त्या तया येन पटेन खलु स्वमुखमवगुण्ठितं तद्विदूरीक्रियतामिति। "( यवनिकामपनयति )" इति वाक्येऽनवधानता दृश्यते कवेरत्र।

**जयत्विति**—यवनिकापनयनेन सर्वमपि अवदातमेव सञ्जातं, नेतः परं कपटनाटकं स्थिरपदं भवेदिति मत्वा कृतं स्वपदव्यनुकूलं जयशब्दोच्चारणमिदं विज्ञेयं तस्य।

**जेदु इति**—आत्मानं प्रकटीकृतं तमवलोक्य स्वात्मानमपि प्रकटयितुमिच्छति वासवदत्तापि—जयत्वित्यादिना। यौगन्धरायणस्य वाक्ये यथा 'स्वामी'—शब्दस्तथैवेहापि 'आर्यपुत्र'शब्दः स्वप्रकटतायामनुकूल इति तत्र हृदयम्।

**अये इति**—अये इति आश्चर्योद्गारः। स च प्रच्छन्नयोस्तयोर्यथार्थ स्वरूपमवगम्येति ज्ञातव्यम्।

**किं न्विति**—किंन्विति वितर्के। इदं, यौगन्धरायणवासवदत्तासन्दर्शनं सत्यं यथार्थस्वरूपम्। स्वप्नः किं नु, स्वप्ने दृश्यमानमिवायथार्थं वेति। पूर्वं सा या मया समुद्रगृहके दृष्टा, भूयः पुनः मया दृश्यते। द्रष्टव्योऽयं सन्दर्भः पञ्चमेऽङ्के अष्टमे नवमे च पद्ये। भूयः-शब्देन स एव समुद्रगृहकगतः प्रसङ्गस्तेन परामृश्यत इति विज्ञातव्यम्। एवं पुरःस्थितायां कः खलु संदेहस्यावसर इति चेत्तदर्थमाह—दृष्टयेति। दृष्टयापि अनया साक्षात्कृतयाप्यनया वासवदत्तया, एवमेव यथा सम्प्रति यः खलु दृश्यते तेनैव प्रकारेण, तदा समुद्रगृहके स्वप्नावसरेऽहं वञ्चितः झटित्यपसरणेन विप्रलब्धः कृतः। एवमेव दृष्टयानया पूर्वं समुद्रगृहकप्रसङ्गेन यथा झटित्यपसरणादिकेन वञ्चितस्य मे स्वप्नो वा विभ्रमो वा इति काप्यवस्था कृता तथैवाधुनापि तया सा क्रियते वेति। एवं च तदवस्थ एव स्वप्नः पूर्वमिव मयाधुनानुभूयतेऽथवा जाग्रतेन पुनर्यथार्थत्वेन साक्षात्क्रियते सेति सन्देहव्यापृतान्त एवाहं वर्ते इति तदभिप्रायः। वृत्तमनुष्टुप् ॥ १७ ॥

नैतद्वासवदत्ताकृतं वञ्चनं किन्तु त्वद्धिते बद्धदृष्टिभिरस्माभिरेव कार्यव्याकुलतया तया तत्कारितमित्यस्माकमेवापराधोऽत्रेत्याशयेनाह—**स्वामिन्निति।** देव्या वासवदत्ताया अपनयेन त्वत्तः प्रच्छाद्य विदूरीकरणेन। कृतापराधः सापराधः खलु

राजा—(उत्थाप्य) यौगन्धरायणो भवान् ननु।

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः ॥ १८ ॥

यौगन्धरायणः—स्वामिभाग्यानामनुगन्तारो वयम्।

पद्मावती—अम्महे अय्या खु इअं! अय्ये! सहिजणसमुदाआरेण अजाणन्तीए अदिक्कन्दो समुदाआरो ता सीसेण पसादेमि।

---

अहं, न पुनर्वासवदत्तेति शेषः। मयैव वासवदत्ता प्रच्छाद्य त्वत्तोऽपनीतेत्यहमेव दोषभाक्, एवञ्च स्वामी क्षन्तुं अर्हति।

तत्कृतस्यापराधस्य फलस्य संक्रातिस्त्वात्मन्येव, सा च पुनर्हितकारिण्येवेति सर्वं समीक्ष्य तस्य च पुनः स्वामिभक्त्या परमं सन्तुष्टो राजा यथार्हं व्यवहारमाचरति, यं च ब्रूते—उत्थाप्येति। **यौगन्धरायण इति**—भवान् ननु सत्यं यौगन्धरायणः। अत्र यौगन्धरायणशब्दः तन्नामधेयरूपे मुख्यार्थेऽनुपयुक्तः स्वामिभक्त्यादिगुणविशिष्टव्यक्तिरूपमर्थं बोधयति। स्वामिभक्त्यतिशयश्चात्र व्यङ्ग्यः। तथा च द्रष्टव्यं साहित्यदर्पणे—"यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति, तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम्" इति। अर्थान्तरसंक्रमितवाच्य इति अविवक्षितवाच्यध्वनेरेकः प्रभेदः। उदाहरणं तु तत्रैव द्रष्टव्यम्—

कदली कदली, करभः करभः, करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥ इति।

**मिथ्योन्मादैरिति**—अस्मिन्पद्ये राजा यौगन्धरायणस्य गुणान्, तत्स्वामिभक्तिं च प्रदर्शयति। एवञ्चाहमेव भवतः उपकृतिभिर्बद्धः कथं ते क्षन्तुमर्हामीत्याशयेनाह—मिथ्येत्यादि। मज्जमानाः वयं, आपत्स्विति शेषः। मिथ्योन्मादैः कृत्रिमैरुन्मत्तव्यवहारैः। यदा चोदयनं महासेनेन निगृहीतं यौगन्धरायणोऽशृणोत्तदा स स्वयं उन्मत्तवेषं परिधाय रुमण्वन्तं च श्रमणकवेषं दत्वा वसन्तकेन सार्धमुज्जयिनीं जगाम। तत्र च तन्मोचने भृशमयततेत्यादि प्रतिज्ञानाटिकायां सुस्पष्टम्। युद्धैश्च, युद्धेषु चानिशं साहाय्यं दत्वेति तदर्थः। शास्त्रदृष्टैश्च मन्त्रितैः, शास्त्रेषु लिखितैस्तत्संवादिभिर्वचनैः मां काले कालेऽवबुध्येति। भवतो यत्नैः, समुद्धृता उत्तारिताः। एवञ्च वयमेव कृतोपकारा भवतेति तदाशयः। वृत्तमनुष्टुप् ॥ १८ ॥

स्वस्वामिकृतया स्वस्तुत्या लज्जितः स्वामिभक्तसदृशमेवाह—**स्वामीति**। वयं, मादृशाः स्वामिभक्ताः। स्वामिनो भाग्यानां, भागधेयस्येत्यर्थः, अनुगन्तारः पृष्ठतः सञ्चारिणः। यत्खलु यस्य कस्यापि प्रयत्नेन वा भवतु सिध्यति तत्सर्वं युष्माकं भागधेयेनैव वयं तु पुनस्तत्र के प्रभवाम इति तदाशयः।

**अम्महे इति**—आर्या, स्वभर्तुः प्रथमा ज्येष्ठा पत्नी। अनेन स्वेन वन्दनीये-

[ अहो आर्या खल्वियम् ! आर्ये ! सखीजनसमुदाचारेणाजानन्त्या-तिक्रान्तः समुदाचारः । तच्छीर्षेण प्रसादयामि । ]

वासवदत्ता—( पद्मावतीमुत्थाप्य ) उट्ठेहि उट्ठेहि अविहवे ! उट्ठेहि । अत्थिसअं णाम सरीरं अवरद्धइ । [ उत्तिष्ठोत्तिष्ठा-विधवे ! उत्तिष्ठ । अर्थिस्वं नाम शरीरमपराध्यति । ]

पद्मावती—अणुग्गहिदह्मि । [ अनुगृहीतास्मि । ]

राजा—वयस्य ! द्वैव्यपनये का कृता ते बुद्धिः ?

यौगन्धरायणः—कौशाम्बीमात्रं परिपालयामीति ।

---

त्युक्तम् । अजानन्त्या, मयेति शेषः । अतिक्रान्तः उल्लङ्घितः समुदाचारः व्यवहारः, यः खलु मयावश्यं पालनीयो गुरुजनं प्रतीति तदाशयः । शीर्षेणेति—शिरसा प्रणिपत्य प्रसादयामि, पादपतनेन तं दोषमपनोदयामीति तदर्थः ।

उट्ठेहि इति—अविधवे ! भर्तृमति ! स्वस्मात्कनिष्ठं जनमुद्दिश्य स्त्रिया दीय-माने आशीर्वादवचने पुरस्क्रियमाणं सम्बोधनमिदं सर्वजनीनमेव । अर्थिनः याचकस्य स्वं सर्वस्वीभूतं शरीरं अर्थी एव स्वयमिति तदर्थः अपराध्यति नाम किल । नात्र तेऽपराधः किन्तु ममैव स इति । यः कोऽपि सम्राड्वा भवतु, स यदि अर्थी भूत्वा-ऽऽत्मानं प्रच्छाद्यान्यसमीपं गत्वा यस्यां कस्यामप्यवस्थायां तत्र स्थास्यति बहुमानं च न लप्स्यते तत्राश्रयदातुर्न कोऽप्यपराधः प्रत्युत तस्यैवेति तदभिप्रायः । तथा च साधूक्तिः—"तृणादपि लघुस्तूलः, तूलादपि च याचकः" इति ।

अणुग्गहिदह्मीति—अनुगृहीतास्मि, उपकृतास्मि ।

वयस्येति—वयस्येति सम्बोधनेन राज्ञस्तत्र परमविश्वस्तत्वं ध्वन्यते । तेन च यन्मया पृच्छ्यते तत्ते विश्वासानुगमकं वस्तुतत्त्वावधारणार्थमेवेत्यपीति विज्ञेयम् । ते त्वयेत्यर्थः । का बुद्धिर्निश्चयः कृतः, किं फलं तत्र त्वयोत्प्रेक्षितमिति यावत् ।

कौशाम्बीति—कौशाम्बीमात्रं, कृत्स्नां कौशाम्बीमित्यर्थः । तथा च हैमः—"मात्रं त्वधृतौ स्वार्थे कात्स्न्र्ये मात्रापरिच्छदे । अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे । काले वृत्ते च" इति । वत्सेषु कौशाम्ब्याः प्राधान्याल्लक्षणया सर्वमपि वत्सदेशमिति तदर्थः । परिपालयामि संरक्षयामीति । इयमेव तत्र बुद्धिरिति तदाशयः । विदूरीकृतायां वासवदत्तायां रुमण्वदादिभिरमात्यैः प्रार्थितः कदाचित्त्वं द्वितीयोद्वाहेऽनुमतिं कथमपि दास्यस्येव । ततश्च स विवाहः पद्मावत्या साकं यथा घटयेत्तथा कृत्वा दर्शकस्य साहाय्यं च लब्ध्वा ते शत्रुमारुणिं युद्धेऽवजेष्यामः, एवं च वत्सराज्यं रक्षितं भवेदिति बुद्धिरेव तत्र हेतुरिति । अन्यश्च न कश्चनोपाय इति विद्यमानोऽभिलक्षित इति संक्षेपः ।

**राजा**—अथ पद्मावत्या हस्ते किं न्यासकारणम् ?

**यौगन्धरायणः**—पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति ।

**राजा**—इदमपि रुमण्वता ज्ञातम् ?

**यौगन्धरायणः**—स्वामिन् ! सर्वैरेव ज्ञातम् ।

**राजा**—अहो शठः खलु रुमण्वान् ।

**यौगन्धरायणः**—स्वामिन्, देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्रभवती च ।

---

देव्यपनयने सुनिश्चितार्थां तद्बुद्धिमवलोक्य पद्मावत्याः समीपं वासवदत्ताया न्यासस्य कारणं तादृशमेव किमपि महदेव भवेदिति कृत्वा पृच्छति—**अथेति**। न्यासकारणं किं, कथं वासवदत्ता भवता निःशङ्कं तत्र निक्षिप्ता। विवाहात्प्राक् नासीत्तादृशः कोऽप्यस्माकं तस्याश्च सम्बन्धो येन सा सुरक्षिता तत्र तिष्ठेदिति भवता विचारितम् ।

**पुष्पकेति**—द्रष्टव्यं यौगन्धरायणस्य वचनं प्रथमेऽङ्के "हन्त भोः । अर्धमवसितं भारस्य"—इत्यादि 'विधिः सुपरीक्षितानी—'त्यन्तम् । पुष्पकभद्रादिभिस्तन्नामधेयवद्भिरादैशिकैः दैवज्ञैः । स्वामिनो भवतः देवी भविष्यतीति । एवञ्च भविष्यत्सम्बन्धमुररीकृत्य योग्यमिदं न्यासस्थानं तस्या भविष्यति, तेन च पुनः परस्परं स्नेहसम्बन्धश्च दृढः स्यात्, सपत्नीभावस्य नामापि न विद्येतेति सर्वमवधार्य तत्र न्यस्तेति तदभिप्रायः ।

**इदमपीति**—अपि रुमण्वता तदाख्येनामात्येन ज्ञातमिदमिति प्रश्नः । उत त्वयैवैकाकिना सर्वमिदं घटितमिति ।

**स्वामिन्निति**—सर्वैरेव सर्वैरमात्यैरेव ज्ञातं, इदं सर्वमपि वस्तुजातमिति शेषः । न मयैकाकिना कृतमिदं किन्तु सर्वैरमात्यैः साकं संमन्त्र्यैवेति तदाशयः । "सर्वज्ञस्याप्येकाकिनो निर्णयो दोषाय" इति न्यायेन सर्वेषामपि साहाय्यं मयात्र लब्धमिति ।

**अहो इति**—शठ इति प्रेम्णा सम्बोधनम् । मातुर्यथा प्रियस्य पुत्रस्य विषये 'गर्दभ' इति । अत्र च कारणं रुमण्वतो वासवदत्तानाशदुःखितस्य राज्ञः सन्निधाने कृत्रिमो व्यवहारः । स च ज्ञायते प्रथमेऽङ्के ब्रह्मचारिणो वचने—"अनाहारे तुल्यः प्रततरुदितक्षामवदनः" इत्यादौ । ज्ञातेऽप्यस्मिन्वृत्ते कृत्रिमं शोकं प्रदर्शयन्नसौ तदैवं व्यवाहरयन्मे लेशतोऽपि शङ्का नोदितेति शठः खल्वेवासाविति तदाशयः ।

**स्वामिन्निति**—देव्या वासवदत्तायाः । रैभ्यः रैभ्यनामा काञ्चुकीयः । अत्रभवती, वासवदत्ताधात्री । वासवदत्ताकुशलवृत्तान्तप्रज्ञापनेन सर्वमपि वस्तुजातमवदातं भवेदिति कृत्वा तथोक्तमनेन । प्रतिनिवर्ततां, उज्जयिनीमित्यर्थादेवापद्यते ।

**राजा**—न, न। सर्व एव वयं यास्यामो देव्या पद्मावत्या सह।

**यौगन्धरायणः**—यदाज्ञापयति स्वामी।

(भरतवाक्यम्)

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः॥ १९॥

(निष्क्रान्ताः सर्वे।)

**षष्ठोऽङ्कः।**

इति स्वप्नवासवदत्तं समाप्तम्।

---

**न नेति**—केवलं वृत्तश्रवणादप्यस्माकं सर्वेषामुपस्थानं तयोरत्यर्थं प्रियं भवेदिति कृत्वा तथा आह। वासवदत्तासपत्नीत्वशङ्काव्यावृत्त्यर्थमत्रोक्तं तेन पद्मावत्या सहेति।

**भरतवाक्यमिति**—भरतानां नटानां वाक्यमिति। तच्चैतन्नाटकेषु अन्ते सर्वैर्नटैः संभूयोच्चार्यमाणमावश्यकत्वेन तत्र तत्र निवेश्यते। यौगन्धरायणादिकानां नटानां कर्तव्यस्य पूर्णतया न तेषां कस्यापीदं वाक्यमित्यवधार्यम्। न पुनरधुना तद्यौगन्धरायणादिकस्य कस्यचित् किन्तु सामान्यनटानां तदिति।

**इमामिति**—सागरपर्यन्तां सागराः पर्यन्ताः सीमानो यस्याः सा ताम्। हिमवान् हिमालयपर्वतः, विन्ध्यः तदाख्यः पर्वतश्च तौ कुण्डले शोभाधायकत्वात् कर्णाभरणविशेषौ यस्यास्ताम्। एकमेवातपत्रमङ्कः साम्राज्य-चिह्नं यस्याः ताम्। इमां महीं भूमिं नोऽस्माकं राजसिंहः राजा सिंह इव शौर्यादिगुणमत्त्वाद्राजसिंह-स्तदाख्यो नृपः कश्चित्। प्रशास्तु अधिकरोतु। अस्माकं राजसिंहो नाम राजा अस्या अखिलाया भारतभूमेः सार्वभौमत्वेन शासको भूयादिति प्रघट्टाशयः॥ १९॥

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्॥ (भग० ९।२७)
आज्ञामेतामुत्तमाङ्गेन धृत्वा पत्रं पुष्पं दीयते पादयोस्ते।
घ्रात्वामोदं प्रीतिमाजीवलोको दर्शं दर्शं तं तथा यामि हर्षम्॥

इति दत्तवाडकरोपाह्वेन पुरुषोत्तमशास्त्रिणा विरचितं स्वप्नवासवदत्त-व्याख्यानमवसितम्।

॥ शुभं भूयात्॥

---

## कथासरित्सागरे

## लावाणकनाम्नि तृतीये लम्बके

प्रथमस्तरङ्गः ।

निर्विघ्नविश्वनिर्माणसिद्धये यदनुग्रहम् ।
अन्ये स वव्रे धातापि तस्मै विघ्नजिते नमः ॥ १ ॥

एवं स राजा वत्सेशः क्रमेण सुतरामभूत् ।
प्राप्तवासवदत्तस्तत्सुखासक्तैकमानसः ॥ २ ॥

यौगन्धरायणश्चास्य महामन्त्री दिवानिशम् ।
सेनापती रुमण्वांश्च राज्यभारमुदूहतुः ॥ ३ ॥

स कदाचिच्च चिन्तावानानीय रजनौ गृहम् ।
निजगाद रुमण्वन्तं मन्त्री यौगन्धरायणः ॥ ४ ॥

पाण्डवान्वयजातोऽयं वत्सेशोऽस्य च मेदिनी ।
कुलक्रमागता कृत्स्ना पुरं च गजसाह्वयम् ॥ ५ ॥

तत्सर्वमजिगीषेण त्यक्तमेतेन भूभृता ।
इहैव चास्य संजातं राज्यमेकत्र मण्डले ॥ ६ ॥

स्त्रीमद्यमृगयासक्तो निश्चिन्तो ह्येष तिष्ठति ।
अस्मासु राज्यचिन्ता च सर्वानेन समर्पिता ॥ ७ ॥

तदस्माभिः स्वबुद्ध्यैव तथा कार्यं यथैष तत् ।
समग्रपृथिवीराज्यं प्राप्नोत्येव क्रमागतम् ॥ ८ ॥

एवं कृते हि भक्तिश्च मन्त्रिता च कृता भवेत् ।
सर्वं च साध्यते बुद्ध्या तथा चैतां कथां शृणु ॥ ९ ॥

तद्यथा स भिषग्बुद्ध्या चक्रे राजहितं यथा ।
वयं राजहितं कुर्मः साधयामास्य मेदिनीम् ॥ १० ॥

परिपन्थी च तत्रैकः प्रद्योतो मगधेश्वरः ।
पार्ष्णिग्राहः स हि सदा पश्चात्कोपं करोति नः ॥ ११ ॥

तत्तस्य कन्यकारत्नमस्ति पद्मावतीति यत् ।
तदस्य वत्सराजस्य कृते याचामहे वयम् ॥ १२ ॥

छन्नां वासवदत्तां च स्थापयित्वा स्वबुद्धितः ।
दत्त्वाग्निं वासके ब्रूमो देवी दग्धेति सर्वतः ॥ १३ ॥

नान्यथा तां सुतां राज्ञे ददाति मगधाधिपः ।
एतदर्थं स हि मया प्रार्थितः पूर्वमुक्तवान् ॥ १४ ॥

नाहं वत्सेश्वरायैतां दास्याम्यात्माधिकां सुताम् ।
तस्य वासवदत्तायां स्नेहो हि सुमहानिति ॥ १५ ॥

सत्यां देव्यां च वत्सेशो नैवान्यां परिणेष्यति ।
देवी दग्धेति जातायां ख्यातौ सर्वं तु सेत्स्यति ॥ १६ ॥
पद्मावत्यां च लब्धायां संबन्धी मगधाधिपः ।
पश्चात्कोपं न कुरुते सहायत्वं च गच्छति ॥ १७ ॥
ततः पूर्वां दिशं जेतुं गच्छामोऽन्याश्च तत्क्रमात् ।
इत्थं वत्सेश्वरस्यैतां साधयामोऽखिलां भुवम् ॥ १८ ॥
कृतोद्योगेषु चास्मासु पृथिवीमेष भूपतिः ।
प्राप्नुयादेव पूर्वं हि दिव्या वागेवमब्रवीत् ॥ १९ ॥
ईदृंशि राजकार्याणि भवन्ति तदिदं वयम् ।
देवीदाहप्रवादेन कार्यं धैर्येण कुर्महे ॥ २० ॥
इत्येतन्निश्चितमतेः श्रुत्वा यौगन्धरायणात् ।
रुमण्वानब्रवीदेवं तर्हि यद्येष निश्चयः ॥ २१ ॥
तद्गोपालकमानीय देव्या भ्रातरमादृतम् ।
संमन्त्र्य च समं तेन सम्यक्सर्वं विधीयताम् ॥ २२ ॥
एवमस्त्विवति वक्ति स्म ततो यौगन्धरायणः ।
तत्प्रत्ययाद्रुमण्वांश्च चक्रे कर्तव्यनिश्चयम् ॥ २३ ॥
अन्येद्युर्मन्त्रिमुख्यौ तौ दूतं व्यसृजतां निजम् ।
गोपालकं तमानेतुमुत्कण्ठाव्यपदेशतः ॥ २४ ॥
कार्यहेतोर्गतः पूर्वं तद्दूतवचनाच्च सः ।
आगाद्गोपालकस्तत्र स्वयं मूर्त इहोत्सवः ॥ २५ ॥
आगतं तदहश्चैनं स्वैरं यौगन्धरायणः ।
निनाय सरुमण्वत्कं गृहं गोपालकं निशि ॥ २६ ॥
तत्र चास्मै तदुत्साहं शशंस स्वचिकीर्षितम् ।
यत्पूर्वं मन्त्रितं तेन सर्वं सह रुमण्वता ॥ २७ ॥
स च राजहितैषी सन्दुःखावहमपि स्वसुः ।
गोपालकोऽनुमेने तत्कर्तव्यं हि सतां वचः ॥ २८ ॥
सर्वमेतत्सुविहितं देवीं दग्धामवेत्य तु ।
प्राणांस्त्यजन्कथं रक्ष्यो वत्सेश इति चिन्त्यताम् ॥ २९ ॥
सदुपायादिसामग्रीसंभवे किल सत्यपि ।
मुख्यमङ्गं हि मन्त्रस्य विनिपातप्रतिक्रिया ॥ ३० ॥
इति भूयोऽपि तत्कालमुक्ते तत्र रुमण्वता ।
उवाचालोचिताशेषकार्यो यौगन्धरायणः ॥ ३१ ॥
नास्त्यत्र चिन्ता यद्राजपुत्री गोपालकस्य सा ।
कनीयसी स्वसा देवी प्राणेभ्योऽप्यधिका प्रिया ॥ ३२ ॥
एतस्य चाल्पमालोक्य शोकं वत्सेश्वरस्तदा ।
जीवत्कदाचिद्देवीति मत्वा धैर्यमवाप्स्यति ॥ ३३ ॥

अपि चोत्तमसत्त्वोऽयं शीघ्रं च परिणीयते ।
पद्मावती ततो देवी दर्श्यते चाचिरादिति ॥ ३४ ॥
एवमेतद्विनिश्चित्य ततो यौगन्धरायणः ।
गोपालको रुमण्वांश्च ततो मन्त्रमिति व्यधुः ॥ ३५ ॥
युक्त्या लावाणकं यामः सह देव्या नृपेण च ।
पर्यन्तो मगधासन्नवर्ती हि विषयोऽस्ति सः ॥ ३६ ॥
सुभगाखेटभूमित्वाद्राज्ञश्चासंनिधानकृत् ।
तत्रान्तःपुरमादीप्य क्रियते यदि चिन्तितम् ॥ ३७ ॥
देवी च स्थाप्यते नीत्वा युक्त्या पद्मावतीगृहे ।
छन्नस्थिताया येनास्याः सैव स्याच्छीलसाक्षिणी ॥ ३८ ॥
एवं रात्रौ मिथः कृत्वा मन्त्रं सर्वेऽपरेऽहनि ।
यौगन्धरायणाद्यास्ते प्राविशन् राजमन्दिरम् ॥ ३९ ॥
तत्रैवमथ विज्ञप्तो वत्सराजो रुमण्वता ।
देव लावाणकेऽस्माकं गतानां वर्तते शिवम् ॥ ४० ॥
स चातिरम्यो विषयस्तत्र चाखेटभूमयः ।
शोभनाः सन्ति ते राजन्नडघासाश्च सुग्रहाः ॥ ४१ ॥
बाधते तं च नैकट्यात्सर्वं स मगधेश्वरः ।
तत्तत्र रक्षाहेतोश्च विनोदाय च गम्यताम् ॥ ४२ ॥
एतच्छ्रुत्वा च वत्सेशः समं वासवदत्तया ।
क्रीडैकलालसश्चक्रे गन्तुं लावाणके मतिम् ॥ ४३ ॥
निश्चिते गमनेऽन्येद्युर्लग्ने च परिकल्पिते ।
अकस्मान्नारदमुनिः कान्तिद्योतितदिङ्मुखः ॥ ४४ ॥
अवतीर्य नभोमध्यात्प्रदत्तनयनोत्सवः ।
शशीव स्वकुलप्रीत्या तं वत्सेश्वरमभ्यगात् ॥ ४५ ॥
गृहीतातिथ्यसत्कारः पारिजातमयीं स्रजम् ।
प्रीतः स च मुनिस्तस्मै ददौ प्रह्वाय भूभृते ॥ ४६ ॥
विद्याधराधिपं पुत्रं कामदेवांशमाप्स्यसि ।
इति वासवदत्तां च सोऽभ्यनन्दत्कृतादरः ॥ ४७ ॥
ततश्चोवाच वत्सेशं स्थिते यौगन्धरायणे ।
राजन्वासवदत्तां ते दृष्ट्वा हन्त स्मृतं मया ॥ ४८ ॥
युधिष्ठिरादयोऽभूवन्पुरा ते प्रपितामहाः ॥ ४९ ॥
ते च मे सुहृदोऽभूवंस्तत्प्रीत्या चाहमागतः ।
त्वां द्रष्टुमिह वत्सेश तदिदं शृणु वच्मि ते ॥ ५० ॥
यथैतन्मे कृतं वाक्यं कुर्यास्त्वं मन्त्रिणां तथा ।
अचिरेण च कालेन महतीमृद्धिमाप्स्यसि ॥ ५१ ॥

कंचित्कालं च दुःखं ते भविष्यति न च त्वया ।
तत्रातिमोहः कर्तव्यः सुखान्तं भविता हि तत् ॥ ५२ ॥
सम्यगेवमभिधाय तत्क्षणं वत्सराजमुदयस्य भाविनः ।
भङ्गिसूचनविधौ विशारदो नारदो मुनिरदर्शनं ययौ ॥ ५३ ॥
सर्वे च तस्य वचसा मुनिपुंगवस्य
यौगन्धरायणमुखाः सचिवास्ततस्ते ।
संभाव्य सिद्ध्युदयमात्मचिकीर्षितस्य
संपादनाय सुतरां जगृहुः प्रमत्तम् ॥ ५४ ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे लावाणकलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

ततः पूर्वोक्तया युक्त्या वत्सराजं सवल्लभम् ।
यौगन्धरायणाद्यास्ते निन्युर्लावाणकं प्रति ॥ १ ॥
स राजा प्राप तं देशं सैन्यघोषेण मूर्च्छता ।
अभिवाञ्छितसंसिद्धिं वदन्तमिव मन्त्रिणाम् ॥ २ ॥
तत्र प्राप्तं विदित्वा च वत्सेशं सपरिच्छदम् ।
अवस्कन्दभयाशङ्की चकम्पे मगधेश्वरः ॥ ३ ॥
यौगन्धरायणोपान्तं सद्बुद्धिर्विससर्ज च ।
स दूतं सोऽपि सन्मन्त्री कार्यज्ञोऽभिननन्द तम् ॥ ४ ॥
वत्सेश्वरोऽपि निवसंस्तस्मिन्देशे दवीयसीम् ।
आखेटकार्थमटवीमटति स्म दिने दिने ॥ ५ ॥
एकस्मिन्दिवसे तस्मिन् राजन्याखेटकं गते ।
कर्तव्यसंविदं कृत्वा गोपालकसमन्वितः ॥ ६ ॥
यौगन्धरायणो धीमान्सरुमण्वद्वसन्तकः ।
देव्या वासवदत्ताया विजने निकटं ययौ ॥ ७ ॥
तत्र तां राजकार्येऽत्र साहाय्ये तत्तदुक्तिभिः ।
प्रह्वामभ्यर्थयामास भ्रात्रा पूर्वं प्रबोधिताम् ॥ ८ ॥
सानुमेने च विरहक्लेशदायि तदात्मनः ।
किं नाम न सहन्ते हि भर्तृभक्ताः कुलाङ्गनाः ॥ ९ ॥
ततस्तां ब्राह्मणीरूपां देवीं यौगन्धरायणः ।
स चकार कृती दत्वा योगं रूपविवर्तनम् ॥ १० ॥
वसन्तकं च कृतवान्काणं वटुकरूपिणम् ।
आत्मना च तथैवाभूत्स्थविरब्राह्मणाकृतिः ॥ ११ ॥
तथारूपां गृहीत्वाथ तां देवीं स महामतिः ।
वसन्तकसखः स्वैरं प्रतस्थे मगधान्प्रति ॥ १२ ॥

तथा वासवदत्ता सा स्वगृहान्निर्गता सती ।
अगाच्चित्तेन भर्तारं पन्थानं वपुषा पुनः ॥ १३ ॥
तन्मन्दिरमथादीप्य दहनेन रुमण्वता ।
हा हा वसन्तकयुता देवी दग्धेत्यघोष्यत ॥ १४ ॥
तथा च दहनाक्रन्दौ समं तत्रोदतिष्ठताम् ।
शनैः शशाम दहनो न पुनः क्रन्दितध्वनिः ॥ १५ ॥
यौगन्धरायणः सोऽथ सह वासवदत्तया ।
वसन्तकेन च प्राप मगधाधिपतेः पुरम् ॥ १६ ॥
तत्रोद्यानगतां दृष्ट्वा समं ताभ्यामुपाययौ ।
पद्मावतीं राजसुतां वार्यमाणोऽपि रक्षिभिः ॥ १७ ॥
पद्मावत्याश्च दृष्ट्वैव ब्राह्मणीरूपधारिणीम् ।
देवीं वासवदत्तां तां दृशोः प्रीतिरजायत ॥ १८ ॥
सा रक्षिणो निषिध्यैव ततो यौगन्धरायणम् ।
आनाययद्राजकन्या ब्राह्मणाकृतिमन्तिकम् ॥ १९ ॥
पप्रच्छ च महाब्रह्मन् का ते बाला भवत्यसौ ।
किमर्थमागतोऽसीति सोऽपि तां प्रत्यभाषत ॥ २० ॥
इयमावन्तिका नाम राजपुत्रि सुता मम ।
अस्याश्च भर्ता व्यसनी त्यक्त्वेमां कुत्रचिद्गतः ॥ २१ ॥
तदेतां स्थापयाम्यद्य तव हस्ते यशस्विनि ।
यावत्तमानयाम्यस्या गत्वान्विष्याचिरात्पतिम् ॥ २२ ॥
भ्राता काणवटुश्चायमिहैवास्याः समीपगः ।
तिष्ठत्येकाकिनीभावदुःखं येन न यात्यसौ ॥ २३ ॥
इत्युक्त्वा राजतनयामङ्गीकृतवचास्तया ।
तामामन्त्र्य स सन्मन्त्री द्रुतं लावाणकं ययौ ॥ २४ ॥
ततो वासवदत्तां तां स्थितामावन्तिकाख्यया ।
वसन्तकं चानुगतं तं काणवटुरूपिणम् ॥ २५ ॥
सहादाय कृतोदारसत्कारा स्नेहशालिनी ।
पद्मावती स्वभवनं विवेश बहुकौतुकम् ॥ २६ ॥
तत्र वासवदत्ता च प्रविष्टा चित्रभित्तिषु ।
पश्यन्ती रामचरिते सीता सेहे निजव्यथाम् ॥ २७ ॥
आकृत्या सौकुमार्येण शयनाशनसौष्ठवैः ।
शरीरसौरभेणापि नीलोत्पलसुगन्धिना ॥ २८ ॥
तामुत्तमां विनिश्चित्य महार्हैरात्मनः समैः ।
पद्मावती यथाकाममुपचारैरुपाचरत् ॥ २९ ॥
अचिन्तयच्च काप्येषा छन्ना नूनमिह स्थिता ।
गूढा किं द्रौपदी नासीद्विराटवसताविति ॥ ३० ॥

अथ वासवदत्तास्याश्चक्रे देव्याः प्रसङ्गतः ।
अम्लानमालातिलकौ वत्सेशात्पूर्वशिक्षितौ ॥ ३१ ॥
तद्भूषितां च दृष्ट्वा तां माता पद्मावतीं रहः ।
पप्रच्छ मालातिलकौ केनेमौ निर्मिताविति ॥ ३२ ॥
ऊचे पद्मावती चैनामत्र मन्मन्दिरे स्थिता ।
काचिदावन्तिका नाम तया कृतमिदं मम ॥ ३३ ॥
तच्छ्रुत्वा सा बभाषे तां माता पुत्रि न तर्हि सा ।
मानुषी कापि देवी सा यस्या विज्ञानमीदृशम् ॥ ३४ ॥
देवता मुनयः श्चापि वञ्चनार्थं सतां गृहे ।
तिष्ठन्त्येव तदा चैतामत्र पुत्रि कथां शृणु ॥ ३५ ॥
( बभूव कुन्तिभोजाख्यो राजा तस्यापि वेश्मनि ।
आगत्य तस्थौ दुर्वासा वञ्चनैकरसो मुनिः ॥ )
........................................... ।
इत्थमासीत्स मुनिस्तत्र तदेषावन्तिकापि ते ।
तद्वदेव स्थिता कापि तत्त्वमाराधयेरिमाम् ॥ ३६ ॥
इति मातृमुखाच्छ्रुत्वा पद्मावत्यन्यरूपिणीम् ।
तत्र वासवदत्तां तां सुतरां बह्वमन्यत ॥ ३७ ॥
सापि वासवदत्तात्र निजनाथविनाकृता ।
तस्थौ विधुरविच्छाया निशीथस्थेव पद्मिनी ॥ ३८ ॥
अत्रान्तरेऽतिदूरासु भ्रान्त्वाखेटकभूमिषु ।
वत्सराजश्चिरादागात्सायं लावाणकं पुनः ॥ ३९ ॥
भस्मीकृतमपश्यच्च तत्रान्तःपुरमग्निना ।
देवीं दग्धां च शुश्राव मन्त्रिभ्यः सवसन्तकाम् ॥ ४० ॥
श्रुत्वैव चापतद् भूमौ मोहेन हृतचेतनः ।
तद्दुःखानुभवक्लेशमपाकर्तुमिवेच्छता ॥ ४१ ॥
क्षणाच्च लब्धसंज्ञः सञ्जज्वाल हृदये शुचा ।
आविष्ट इव तत्रस्थदेवीदाहेक्षणाग्निना ॥ ४२ ॥
विलपन्नथ दुःखार्तो देहत्यागैकसंमुखः ।
क्षणान्तरे स नृपतिः संस्मृत्यैतदचिन्तयत् ॥ ४३ ॥
विद्याधराधिपः पुत्रो देव्यास्तस्या भविष्यति ।
एतन्मे नारदमुनिर्वक्ति स्म न च तन्मृषा ॥ ४४ ॥
कंचित्कालं च दुःखं मे तेनैव मुनिनोदितम् ।
गोपालकस्य चैतस्य शोकः स्वल्प इवेक्ष्यते ॥ ४५ ॥
यौगन्धरायणादीनां न चैषामतिदुःखिता ।

दृश्यते तेन जाने सा देवी जीवेत्कथंचन ॥ ४६ ॥

इयं किमपि नीतिस्तु प्रयुक्ता मन्त्रिभिर्भवेत् ।
अतो मम भवेज्जातु तया देव्या समागमः ॥ ४७ ॥
तत्पश्याम्यत्र पर्यन्तमित्यालोच्य स भूपतिः ।
निदधे हृदये धैर्यं बोध्यमानश्च मन्त्रिभिः ॥ ४८ ॥
गोपालकश्च संदिश्य तद्यथावस्तु तत्क्षणम् ।
प्रजिघाय ततश्चारं धृतिहेतोरलक्षितम् ॥ ४९ ॥
एवं गते स्ववृत्तान्ते लावाणकगतैस्तदा ।
गत्वा मगधराजाय चारैः सर्वं निवेदितम् ॥ ५० ॥
स तद् बुद्ध्वैव कालज्ञो वत्सराजाय तां सुताम् ।
दातुं पद्मावतीमैच्छत्पूर्वं तन्मन्त्रिमार्गिताम् ॥ ५१ ॥
ततो दूतमुखेनैनमर्थं वत्सेश्वराय सः ।
यौगन्धरायणायापि संदिदेश यथेप्सितम् ॥ ५२ ॥
यौगन्धरायणोक्त्या च वत्सेशोऽङ्गीचकार तत् ।
प्रच्छादितैतदर्थं स्याद्देवी जात्विति चिन्तयन् ॥ ५३ ॥
ततो लग्नं विनिश्चित्य तूर्णं यौगन्धरायणः ॥
तस्मै मगधराजाय प्रतिदूतं व्यसर्जयत् ॥ ५४ ॥
त्वदिच्छाङ्गीकृतास्माभिस्तदितः सप्तमे दिने ।
पद्मावतीविवाहाय वत्सेशोऽत्रागमिष्यति ॥ ५५ ॥
शीघ्रं वासवदत्तां च येनासौ विस्मरिष्यति ।
इति चास्मै महामन्त्री संदिदेश स भूभृते ॥ ५६ ॥
प्रतिदूतः स गत्वा च यथासंदिष्टमभ्यधात् ।
ततो मगधराजाय स चाप्यभिननन्द तम् ॥ ५७ ॥
ततः स दुहितृस्नेहनिजेच्छाविभवोचितम् ।
विवाहोत्सवसंभारं चकार मगधेश्वरः ॥ ५८ ॥
सा चाभीष्टवरश्रुत्या मुदं पद्मावती ययौ ।
प्राप वासवदत्ता च तद्वार्ताकर्णनाच्छुचम् ॥ ५९ ॥
सा वार्ता कर्णमागत्य तस्या वैवर्ण्यदायिनी ।
प्रच्छन्नवासवैरूप्यसाहायकमिवाकरोत् ॥ ६० ॥
इत्थं मित्रीकृतः शत्रुर्न च भर्तान्यथा त्वयि ।
वसन्तकोक्तिरित्यस्याः सखीव विदधे धृतिम् ॥ ६१ ॥
अथासन्नविवाहायाः पद्मावत्या मनस्विनी ।
अम्लानमालातिलकौ दिव्यौ भूयश्चकार सा ॥ ६२ ॥
ततो वत्सेश्वरस्तत्र संप्राप्ते सप्तमेऽहनि ।
ससैन्यो मन्त्रिभिः साकं परिणेतुं किलाययौ ॥ ६३ ॥
मनसापि तदुद्योगं विरही स कथं स्पृशेत् ।
देवीं लभेय तामेवमित्याशा न भवेद्यदि ॥ ६४ ॥

प्रत्युद्ययौ च तं सद्यः सानन्दो मगधेश्वरः ।
प्रजानेत्रोत्सवं चन्द्रमुदयस्थमिवाम्बुधिः ॥ ६५ ॥
विवेशाथ स वत्सेशो मगधाधिपतेः पुरम् ।
समन्तात्पौरलोकस्य मानसं च महोत्सवः ॥ ६६ ॥
विरहक्षामवपुषं मनःसंमोददायिनम् ।
ददृशुस्तत्र नार्यस्तं रतिहीनमिव स्मरम् ॥ ६७ ॥
प्रविश्य मगधेशस्य वत्सेशोऽप्यथ मन्दिरम् ।
सनाथं पतिपत्नीभिः कौतुकागारमाययौ ॥ ६८ ॥
तत्र पद्मावतीमन्तर्ददर्श कृतकौतुकाम् ।
स राजा पूर्णवक्त्रेन्दुजितपूर्णेन्दुमण्डलाम् ॥ ६९ ॥
तस्याश्च मालातिलकौ दिव्यावालोक्य तौ निजौ ।
एतौ कुतोऽस्या इत्येवं विममर्श स भूपतिः ॥ ७० ॥
ततः स वेदीमारुह्य तस्या जग्राह यत्करम् ।
तदेवारम्भतां प्राप तस्य पृथ्व्याः करग्रहे ॥ ७१ ॥
प्रियवासवदत्तोऽयमिदं शक्नोति नेक्षितुम् ।
इतीव वेदीधूमोऽस्य बाष्पेण पिदधे दृशौ ॥ ७२ ॥
अग्निप्रदक्षिणे ताम्रं तदा पद्मावतीमुखम् ।
विज्ञातभर्त्रभिप्रायं कोपाकुलमिवाबभौ ॥ ७३ ॥
मुमोच स कृतोद्वाहः कराद्वत्सेश्वरो वधूम् ।
न तु वासवदत्तां तां तत्याज हृदयात्क्षणम् ॥ ७४ ॥
ततस्तथा ददौ तस्मै रत्नानि मगधाधिपः ।
निर्दुग्धरत्नरिक्तेव पृथिवी बुबुधे यथा ॥ ७५ ॥
साक्षीकृत्य च तत्कालमग्निं यौगन्धरायणः ।
अद्रोहप्रत्ययं राज्ञो मगधेशमकारयत् ॥ ७६ ॥
प्रदत्तवस्त्राभरणः प्रगीतवरचारणः ।
प्रनृत्तवरनारीकः प्रससार महोत्सवः ॥ ७७ ॥
उदयापेक्षिणी पत्युः सुसेवालक्षितस्थिता ।
तदा वासवदत्ताभूद् दिवा कान्तिरिवैन्दवी ॥ ७८ ॥
अन्तःपुरमुपायाते राज्ञि वत्सेश्वरे ततः ।
देवीसंदर्शनाशङ्की कृती यौगन्धरायणः ॥ ७९ ॥
मन्त्रभेदभयादेवं मगधेश्वरमभ्यधात् ।
अद्यैव नाथ वत्सेशः प्रयाति त्वद्गृहादिति ॥ ८० ॥
तथेत्यङ्गीकृतं तेन तमेवार्थं तदैव सः ।
व्यजिज्ञपद्वत्सराजं सोऽपि तच्छ्रद्दधे तथा ॥ ८१ ॥
अथोच्चचाल वत्सेशो भुक्तपीतपरिच्छदः ।
मन्त्रिभिः सममादाय वधूं पद्मावतीं ततः ॥ ८२ ॥

पद्मावत्या विसृष्टं च सुखमारुह्य वाहनम् ।
तयैव च समादिष्टैस्तन्महत्तरकैः सह ॥ ८३ ॥
आगाद्वासवदत्तापि गुप्तं सैन्यस्य पृष्ठतः ।
कृतरूपविवर्तं तं पुरस्कृत्य वसन्तकम् ॥ ८४ ॥
क्रमाल्लावाणकं प्राप्य वत्सेशो वसतिं निजाम् ।
प्रविवेश समं बध्वा देवीचित्तं तु केवलः ॥ ८५ ॥
एत्य वासवदत्तापि सा गोपालकमन्दिरम् ।
विवेशाथ निशीथे च परिस्थाप्य महत्तरान् ॥ ८६ ॥
तत्र गोपालकं दृष्ट्वा भ्रातरं दर्शितादरम् ।
कण्ठे जग्राह रुदती वाष्पव्याकुललोचनम् ॥ ८७ ॥
तत्क्षणे स्थितसंविच्च तत्र यौगन्धरायणः ।
आययौ सरुमण्वत्कस्तया देव्या कृतादरः ॥ ८८ ॥
सोऽस्याः प्रोत्साहविश्लेषदुःखं यावद्व्यपोहति ।
तावत्पद्मावतीपार्श्वं प्रययुस्ते महत्तराः ॥ ८९ ॥
आगतावन्तिका देवी किमप्यस्मान्विहाय तु ।
प्रविष्टा राजपुत्रस्य गृहं गोपालकस्य सा ॥ ९० ॥
इति पद्मावती सा तैर्विज्ञप्ता स्वमहत्तरैः ।
वत्सेश्वराग्रे साशङ्का तानेवं प्रत्यभाषत ॥ ९१ ॥
गच्छतावन्तिकां ब्रूथ निक्षेपस्त्वं हि मे स्थिता ।
तदत्र किं ते यत्राहं तत्रैवागम्यतामिति ॥ ९२ ॥
तच्छ्रुत्वा तेषु यातेषु राजा पद्मावतीं रहः ।
पप्रच्छ मालातिलकौ केनेमौ ते कृताविति ॥ ९३ ॥
सावोचदथ मद्गेहे न्यस्ता विप्रेण केनचित् ।
आवन्तिकाभिधा यैषा तस्याः शिल्पमिदं महत् ॥ ९४ ॥
तच्छ्रुत्वैव च वत्सेशो गोपालगृहमाययौ ।
नूनं वासवदत्ता सा भवेदत्रेति चिन्तयन् ॥ ९५ ॥
प्रविवेश च गत्वा तद्द्वारस्थितमहत्तरम् ।
अन्तःस्थदेवीगोपालमन्त्रिद्वयवसन्तकम् ॥ ९६ ॥
तत्र वासवदत्तां तां ददर्श प्रोषितागताम् ।
उपप्लवविनिर्मुक्तां मूर्तिं चान्द्रमसीमिव ॥ ९७ ॥
पपाताथ महीपृष्ठे स शोकविषविह्वलः ।
कम्पो वासवदत्ताया हृदये तूदपद्यत ॥ ९८ ॥
ततः साप्यपतद् भूमौ गात्रैर्विरहपाण्डुरैः ॥
विललाप च निन्दन्ती तदाचरितमात्मनः ॥ ९९ ॥
अथ तौ दंपती शोकदीनौ रुरुदतुस्तथा ।
यौगन्धरायणोऽप्यासीद्बाष्पधौतमुखो यथा ॥ १०० ॥

तथाविधं च तच्छ्रुत्वा काले कोलाहलं तदा ।
पद्मावत्यपि तत्रैव साकुला तमुपाययौ ॥ १०१ ॥
क्रमादवगतार्थां च राजवासवदत्तयोः ।
तुल्यावस्थैव साप्यासीत्स्निग्धमुग्धा हि सत्स्त्रियः ॥ १०२ ॥
किं जीवितेन मे कार्यं भर्तृदुःखप्रदायिना ।
इति वासवदत्ता च जगाद रुदती मुहुः ॥ १०३ ॥
मगधेशसुतालाभात्तव साम्राज्यकाङ्क्षिणा ।
कृतमेतन्मया देव देव्या दोषो न कश्चन ॥ १०४ ॥
इयं त्वस्याः सपत्न्येव प्रवासे शीलसाक्षिणी ।
इत्युवाचाथ वत्सेशं धीरो यौगन्धरायणः ॥ १०५ ॥
अहमत्र विशाम्यग्नावस्याः शुद्धिप्रकाशने ।
इति पद्मावती तत्र जगादामत्सराशया ॥ १०६ ॥
अहमेवापराध्यामि यत्कृते सुमहानयम् ।
सोढो देव्यापि हि क्लेश इति राजाप्यभाषत ॥ १०७ ॥
अग्निप्रवेशः कार्यो मे राज्ञो हृदयशुद्धये ।
इति वासवदत्ता च बभाषे बद्धनिश्चया ॥ १०८ ॥
ततः स कृतिनां धुर्यो धीमान्यौगन्धरायणः ॥
आचम्य प्राङ्मुखः शुद्धि इति वाचमुदैरयत् ॥ १०९ ॥
यद्यहं हितकृद्राज्ञो देवी शुद्धिमती यदि ।
ब्रूत भो लोकपालास्तन्न चेद्देहं त्यजाम्यहम् ॥ ११० ॥
इत्युक्त्वा विरते तस्मिन्दिव्या वागुदभूदियम् ॥
धन्यस्त्वं नृपते यस्य मन्त्री यौगन्धरायणः ॥ १११ ॥
यस्य वासवदत्ता च भार्या प्राग्जन्मदेवता ।
न दोषः कश्चिदेतस्या इत्युक्त्वा वागुपारमत् ॥ ११२ ॥

आकर्ण्य तन्मुखरिताखिलदिग्विभाग-
मामन्द्रनूतनघनाघनगर्जितश्रि ।
उत्कंधराश्च सुचिरं विहताभितापाः
सर्वेऽपि ते स्फुटविडम्बितनीलकण्ठाः ॥ ११३ ॥

गोपालकसहितोऽपि च राजा यौगन्धरायणाचरितम् ।
स्तौति स वत्सराजो मेने पृथ्वीं च हस्तगताम् ॥ ११४ ॥
दधदथ नृपतिः स मूर्तिमत्यौ निकटगते रतिनिर्वृती इवोभे ।
अनुदिनसहवाससानुरागो निजदयिते परमुत्सवं बभार ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे
लावाणकलम्बके द्वितीयस्तरङ्गः ।